# श्री वेमगीताप्रथमसहस्रम् ।

# SRI VEMAGEETA PRATHAMA SAHASRAM

## PART I

ORIGINAL (*Telugu*)

BY

VEMANA

*Sanskrit translation by*

GANDHAM SRIRAMAMURTY

AND

IRRINKI NARASIMHA MURTY

*English translation by*

C. P. BROWN

★

*PUBLISHER :*

*SRIRAMA NRUSIMHA GRANTHA RATNAMALA*

TOLERU

श्रीरामनृसिंहग्रन्थरत्नमाला 8.

श्रीवेमनयोगीन्द्राय नमः ।

# श्री वेमगीताप्रथमसहस्रे पूर्वार्धम् ।

समूलं, आंग्लविवरणसङ्कलितञ्च ।


आन्ध्रमूलम् :— श्री वेमनयोगीन्द्रः ।

संस्कृतानुवादः :— श्रीरामनृसिंहमूर्तिकविवरौ ।

(गन्धं श्रीराममूर्ति, इरिङ्कि नरसिंहमूर्ति ।)

आंग्लविवरणम् :— श्री चार्लेस् पिलिप् ब्रौन् ।



—: प्रकाशिका :—

श्रीरामनृसिंहग्रन्थरत्नमाला

तोलेरु ।

1961.




[ मूल्यम् रु. ३/-

श्री वेमनयोगीन्द्रः ।

श्रीमत्सनत्कुमारांशं वेदवेदाङ्गवेदिनम् ।
दिगम्बरं कुमाराभं स्तुवो वेमाख्ययोगिनम् ॥

May our praise go unto Vemana,
The spirit of Sanathkumara reborn,
The yogin full of the Vedic lore,
Who, innocent like a child, no clothing bore.

# विज्ञप्तिः ।

## वेमन–जीवित–संग्रहः ।

पुराकिल वेमनाख्यो महायोगी सुबोधान्ध्रभाषायां पद्यरूपेण ऐहिकामुष्मिकविषयान् सर्वान् मानवलोकाय सम्यक् न्यबोधयत् । तान्येव पद्यानि 'वेमगीता' इत्याख्यया गैर्वाण्यां वाण्यां अनुष्टुप्छन्दसा आवाभ्यामनूदितानि । आन्ध्रभाषायां 'अन्न' इति पदमादरातिसूचकम् । ततो वेमः 'वेमन्न' इति प्रथितो बभूव । 'वेमन' इति च तद्रूपान्तरमस्ति । वेमनकविरान्ध्रदेशे कोण्डवीडुनाम्नि पट्टणे क्री॥ श॥ चतुर्दशशताब्दे नन्दनकार्तिकशुक्लपौर्णमास्यां षडशीत्युत्तरत्रयोदशशततमवत्सरादारभ्य षण्णवत्युत्तरत्रयोदशशततमवत्सरपर्यन्तं कोण्डवीडुराज्यं पालयतः कोमरगिरि वेमभूपालात् मल्लमाम्बाराज्ञ्यां तृतीयपुत्रोऽजनि । अयमेव षण्णवत्युत्तरत्रयोदशशततमवत्सरादारभ्य चतुर्विंशत्युत्तरचतुर्दशशततमवत्सरपर्यन्तं राज्यं परिपालयतः अनवेममहीपालस्य कनिष्ठसोदरो भूत्वा बम्मेर पोतनामात्यस्य सहाध्यायी सन् सहजप्रतिभया विभ्राजमानः सोमशेखराख्यगुरुशुश्रूषया संस्कृतान्ध्रभाषासाहितीमनर्गळां सम्पाद्य विविधराजभोगाननुभूय स्वसमक्षमेव विंशतिहायनेषु संवृत्तं राज्यपतनमुद्वीक्ष्य मनःपरिपाकेन पुराकृतसुकृतविशेषेण च सम्भूतसमग्रवैराग्यः कालवशात् घटनावशाच्च हृदयकुहरोत्थितं भावोद्रेकमेव पद्यरूपेण व्यक्तीकुर्वन् सहस्रशः पद्यान्युपगीय अन्ते कटारुपल्लीनाम्नि ग्रामे शार्वरि चैत्र शुक्ल नवम्यामष्टषष्ठिवर्षीयो भौतिकशरीरमुत्सृज्य परं पदं प्रापेति प्रतीतिः ।

## साहिती – तन्त्रमिश्र ।

संस्कृतीयौ राट्, पालकशब्दावान्ध्रभाषायां 'रेड्डि, कापु' इति व्यवहृतौ स्तः । ततएव प्रभुकुटुम्बगताः 'भूपाल्' इति बिरुदनाम्ना व्यवह्रियन्ते । कोण्डवीडुसंस्थाने एतद्वेमनवंशीयानां भूपालकनामव्यवहृतिर्वेमभूपाल्, कृष्णरामभूपाल् इत्यादिनामभिः व्यक्तीक्रियते । वेमनकुटुम्बस्थः पेद्कोमटिवेमनाख्यः शृङ्गारदीपिकासमाख्यां अमरुककाव्यस्य संस्कृतव्याख्यां सप्तशतीसारसमाख्यां गाथासप्तशतीव्याख्यां च व्यरचयत् । अस्य पेद्कोमटि वेमनाख्यस्य जीवितचरितं वेमभूपालीयनामान्तरेण प्रथितं पार्वतीपरिणयाख्यसंस्कृतनाटककर्त्रा वामनभट्टनामधेयेन विरचितम् । तथा कुमारगिरिभूपालो वसन्तराजीयाभिधेयं संस्कृतकाव्यं विरचयामास । कुमारगिरेर्जामाता काटायवेमनाभिख्यः कालिदासरूपकाणां व्याख्यां विलिलेख । तत एतत्कोण्डवीडुरेड्डिसंस्थानाधीशाः संस्कृतान्ध्रयोः कृतिकर्तारः कृतिभर्तारश्च बभूवुरिति व्यक्तमेव । तस्मात् वेमनयोगी च संस्कृतान्ध्रभाषाद्वितयेऽपि विद्वानित्युक्तिः निर्विवादैव । अतएव एर्राप्रगड, श्रीनाथाद्यान्ध्रकविवरेभ्य एतत्संस्थानमाश्रयमदात् । वेमनकविरान्ध्रवाङ्मयच्छन्दसि संस्कृतवाङ्मयगतानुष्टुप्छन्दस्तुलितेषु ललितेषु विशालभावकलितेषु आटवेलदिनामकपद्येषु अनुपमवेदवाक्यानि प्रकटीकृत्य स्वकीयां प्रतिभामान्ध्रलोके प्राचीकटत् । केवलपारिभाषिकपदगूढं सर्वोपनिषत्सारं वेदान्तशास्त्रं सर्वसाधारणव्यवहारभाषायां व्यक्तीकृत्य महाजनादृतिं प्राप । वेमनकवे रचनायां तत्रतत्र 'मानिनीमनोजमन्दिरानन्दैकलोलुडु, ऊर्ध्वलोकसुखमु, आभिजात्यमदमु, विश्वदाभिराम' इत्यादयस्संस्कृतपद-

प्रयोगास्सन्ति । तथापि प्रायशः संस्कृतभगवद्गीतेव आन्ध्रभाषायां सर्वसुबोधफणित्या वेमनकविता राजते । अपि च तत्र तत्र ज्ञ–क्क, श–प्राण, ऋग्यजु–योग्य, इत्यादिलाक्षणिका यतिविशेषास्सन्ति । प्रकृतिरूपयोः गृहगेहशब्दयोः विकृतौ 'गीमु' इति व्यवहृतिरेवास्ति । किन्तु वेमनकविः 'गुरमु' इति च व्याजहार । एवमादिविषयाः पाठकानां सर्वत्र विशदा भवन्ति ।

वेमनाख्यो महायोगी 'कुत्राऽजनि? कस्यां भाषायां गीतालापमकरोत्?' इत्येवंरूपेण विवादेनालम् । तद्गीतासार एवास्माभिरास्वाद्यः । वेमनकविनाऽऽशुधारया तां तां परिस्थितिमनुसृत्य सद्यएव गुम्फितानि पद्यानि लेखनसौकर्यरहिते तस्मिन्काले केवलमात्रकुसुमसौरभाघ्राणलोलुपशिष्यालयः कियन्मात्रं निर्दुष्टं धारयितुं शक्नुवन्ति? विचिन्तयन्तु । केचन एतन्नमसत्यमनालोचयन्तः 'वेमस्य भावभाषादयो न समीचीनाः' इति वृथा तन्निन्दया तृप्तिमन्तो दृश्यन्ते । सर्वमेतदहं ममेत्यनुसन्धानसहितमेव । 'तत्र ममेत्यनुबन्धमसज्जडदुःखात्मकं शवरूपं च । अहमित्येतत् वस्तु सत्यज्ञानानन्दात्मकं शिवरूपं च' इत्येव वेमनयोगी मुहुर्मुहुः स्वप्रोक्तपद्येषु प्रतिपादयामास । मङ्गळपदपर्यायशिवशब्दव्याहृत्या जातिमतातिगं वेमनयोगिनं शैवमतस्थं मत्वा केचन निन्दन्ति । विना फलापेक्षया परसन्तुष्टिमनुद्दिश्य पराभिप्रायदास्यमनवलम्ब्य अस्थिरबाह्यसौख्यमतीत्य शाश्वतान्तरसौख्यमेव वाञ्छतः अध्यात्मगीतिकां गायतः कविकोकिलस्य लोककृतदूषणभूषणादिभिः का वा हानिः ? को वा लाभः ?

आन्ध्रप्रदेशे सम्यगान्ध्रसंस्कृतभाषानुभूतिमर्जित्वा भक्तिज्ञानघनौ प्रशस्तपद्यपद्यकवी भत्वा 'स्वयं तीर्णः परांस्तारये' दिति न्यायानुसारेण स्वयं तीर्णौ लोके सूक्तिबीजविक्षेपं कृतवन्तौ त्यागय्य वेमननामधेयौ सर्वेषामपि चिरस्मरणीयौ। 'त्यागय्यः नारदांशसम्भूतो वेमनः सनत्कुमारांशसम्भूतः' इति प्रतीतिरप्यस्ति। त्यागय्यमहात्मनः पद्साहित्ये केवलगानकळारिरंसुभ्यो गायकजनेभ्योऽपभ्रंशरूपं प्रापिते आधुनिकाः संस्कृतान्ध्रभाषावेत्तारः तन्निर्दुष्टं कृत्वा सर्वोपनिषत्सारमिति जुघुषुः। पद्संख्यापि षोडशसहस्रपरिमिता लब्धा। वेमनयोगिनस्साहित्यमपि तथैव विभ्रंशितमभूत्। क्री॥ श॥ पञ्चविंशत्युत्तराष्टादशशततमवत्सरादारभ्यैव महतां महता यत्नेन 'वेमनाख्यो महायोगी कविः पण्डितश्च' इति लोके परिचितोऽभूत्। वेमनकवेः पद्यानि द्राविडकर्णाटांग्लप्रभ्यादिभाषासु परिवर्तितान्यभूवन्। श्रीमतां सि. पि. ब्रौन्, क्याम्बिल्, माक्लिन्, त्यागरायशेट्टिकम्पेनी, वाविल्लकम्पेनी, पञ्चाग्नुल आदिनारायणशास्त्रि, वेङ्कटपार्वतीश्वरकवुलु, शेषाद्रिरमणकवुलु, वरदाचार्युलु, वंगूरि सुब्बाराव्, कट्टमञ्चि रामलिङ्गारेड्डि, कूर्मा वेङ्कटरेड्डिनायुडु, रघुपति वेङ्कटरत्नंनायुडु, राल्लपल्लि अनन्तकृष्णशर्मप्रभृतीनां आन्ध्रभाषाभिमानिनां महात्मनां महोद्यमेन वेमनकविसाहितीमहिमा अस्मद्दृष्टिपथमाजगाम। वेमनपद्यानि पञ्चसहस्राणि लब्धानि। व्यावहारिकयामभिव्यक्तानि महात्मनां वाक्यानि संस्कृतभाषायां परिवर्तितानि गण्यतां यान्ति। ततः तेषु प्रतिसहस्रं संस्कृत्य संस्कृतभाषायामनुष्टुप्छन्दसा लोके प्रकटयितुमावयोस्सङ्कल्पोऽजनि। तदनुसारेण वेमगीतायां प्रथमसहस्रं प्रकटय्य महाजनेभ्यस्सम्यगर्पितम्। एत-

प्रथमसहस्रस्य श्रीवाविठ्ठलमुद्रणालयोदितग्रन्थएव मातृकात्वेन गृहीतः । कृपया यदि सहृदया अत्रत्यान् गुणदोषान् सूचयेयुः तर्हि द्वितीय-मुद्रणे द्वितीयसहस्रे च तत्सूक्त्यनुसारेण संस्कर्तुं यतिष्यावहे ।

पञ्चदशशताब्दानन्तरं मल्हणचरित्रकर्ता एडपाटि एर्रप्रग्गडः, एकाम्रलिङ्गशतककविर्लक्ष्मणः, तोभ्यचरित्रकर्ता पिङ्गळि एर्रनार्यः, अन्य-वादकोलाहलग्रन्थकर्ता शिवयोगीन्द्रः, नागरखण्डरचयिता तुरगा रामकविः इत्यादयः केचन आध्यात्मिककवयएव स्वस्वग्रन्थादौ वेमनकविं तुष्टुवुः । शृङ्गारप्रबन्धकवयस्तु न तथा ।

शृङ्गारकविस्तु पामरजनग्राह्यं शृङ्गाररसमेवाभिवर्ण्य तद्रस-पिपासून् प्रभून् प्रजाश्च समाकृष्य धनं हृत्वा भोगलम्पटो भवेत् । आध्या-त्मिककविस्तु यद्यद्वस्त्वस्ति तत्र 'नित्यं किमनित्यं किमिति, सत्यं किमसत्यं कि' मिति च सविमर्शं विदित्वा आत्मरतो भूत्वा लोके सद्रूपं नित्यरूपं वस्तु प्रकटयति । किन्तु प्रभुभ्यो वा प्रजाभ्यो वा धनभोगादिकं नेच्छति । ततः आध्यात्मिककविं विज्ञाय आदृतवन्तः प्राज्ञा अतिविरळास्सन्ति । तत्रेदं निदर्शनं पश्यत । आध्यात्मिक कविः 'योषिच्छरीरे चक्षुः श्रोत्रं घ्राणं उरः पाणिपादं इत्यादयः अव-यवाः सर्वे मांसवसादिविकारा रक्तपूरिता मज्जामेदोऽस्थिश्लेष्मादि-कासह्यवस्तुसमवायसम्भरिताः तस्मात् त्वं स्त्रीलोलुपो मा भूः' इति विरक्तिमार्गं बोधयति । शृङ्गारकविस्तावत् 'स्त्रियश्चक्षुषी पद्मपत्रे, कण्ठः शङ्खसन्निभः, यानं हंसयानसमानं, वचांस्यमृतमयानि, अध-रोष्ठलालाजलममृतमेव, सैव तव आराध्यप्रेमदेवता' इति वर्णयन् प्रागेव मोहाब्धौ स्वतो निमग्नं पुरुषं पौनःपुन्येन मोहे निमज्जयति । सोऽपि

अज्ञानाद्धेतोः तदुक्तिमभिनन्द्य तस्मै बहुलं वित्तं दत्त्वा स्वयमधोगतिं प्राप्नुयात् । अन्धः अन्धाश्रयेण गर्तं न पतति किम्? विषदिग्धस्य नरस्य तिक्तरसः मधुरइव वर्तते । तथैव मोहग्रस्तस्य लालाजलं अमृतं किं न स्यात्? । स्त्रीणामवयवेषु पद्मपत्रशङ्खादिउपमानवस्तून्यारोप्य स्त्रीमोहे संसक्तो भवति । न पुनस्तेषु रम्योपमानवस्तुषु तावन्मात्रमानन्दं प्राप्नोति । अपि च आत्मनो व्यामोहेन केवलस्त्रीपुरुषव्यवस्थया नातिसन्तृप्तः समुद्रपर्वतमेघचन्द्रगुरुबुधादिष्वपि पुंस्त्वं नदीभूमितारादिषु स्त्रीत्वं च आरोप्य कथाः निर्माय स्वयं भ्रान्तो भूत्वा लोकं भ्रामयति । प्रेम्णि सुखमस्तीति वदति । किन्तु तत्प्रेम स्त्रीपुरुषशृङ्गारक्रीडासु परिमितं करोति । मातृप्रेम विश्वप्रेमादिसहजनिष्कलङ्कप्रेम तस्य दृष्टिपथं नायाति । वस्तुतः प्रभवः पण्डिताश्चैव लोकोद्धरणसमर्थाः, यद्येते पतिता भवेयुः तदा लोकस्य अधोगतिं विना किमस्ति? बुद्धाशोकादीन् द्वित्रान् वर्जयित्वा बहवः प्रभवो दुर्व्यसनलोलुपा एवेत्युक्तिः सत्येतरा न भवति । यथा पाश्चात्या भौतिकशास्त्रज्ञानकुशलाः तथा तत्त्वशास्त्रे भारतीयाः पण्डिता इति वचनं विनाध्यात्मिककवीन् केवलशृङ्गारकविषु वृथारोपितप्रभावकविषु वा कथं रूढं भवेत्? ।

आध्यात्मिककविः लोके राजाश्रयमनादृत्य दैवमेव शरण्यमिति चिन्तयन् दैवबलेन-विरुद्धप्रवृत्तिमुपशमयन् आत्मनैव आत्मनि रमते । सामान्यलौकिकज्ञानयुतः प्रभुर्वा जनो वा लोकातिगं तं कथं आद्रियते? प्रभूणां मनस्तत्त्वमेव उपलक्ष्य रचनां कुर्वते कवयेऽनेकाग्रहारादिदानैः प्रभुसत्कारस्सिद्ध्यति । लोकपरिपाटिरेतादृशी ।

वेमनकविः स्वकवितायां सहजोपमालङ्कारादिचमत्कृतिं दर्शयामास। तथापि सि. पि. ब्रौन्प्रभृतिभिः लोकज्ञैः रचिताभिरांग्लादिव्याख्याभिरेव वेमनकविः स्वसाहित्येनसह विद्याधिकारानां दृक्पथमाजगाम। नोचेद्वेमनसाहित्यस्य का वा गतिस्स्यादिति न विद्मः।

वेमनयोगी स्वयमेव वक्ता स्वयमेव श्रोता च भूत्वा 'सर्वं खल्विदं ब्रह्मेति' सूत्रानुसारेण ज्ञानं लोके सर्वत्र प्रकाशयामास। तत एव वेमनपद्यानि आत्मबोधामृतरूपाणि, सर्वोपनिषत्सारभूतानि, सद्योमोक्षप्रदानीति च व्यवह्रियन्ते।

अपि च प्रकृतिपरिशीलनशक्तिः, सृष्टितत्त्वविज्ञानं, शब्दशास्त्रपरिज्ञानं, भावसंशुद्धिः, कल्पनाप्रटिमा, वर्णनाचातुरी, उपमानसन्धानपाटवं, प्रभुमित्रकान्तासम्मितबोधनं, वास्तविकस्थितिग्रहणं, वचस्सौलभ्यं, सहजधारा, लोककल्याणाशयः इत्यादयः अन्ये च गुणाः कविजनाश्रया वेमनकविपुङ्गवे द्योतन्ते।

एकदा विश्वमानवहृदयकुहरेषु यो वेद आनन्दचन्द्रिकाः प्रसारयामास, तस्य प्रभावः, यश्च तदा प्रतिष्ठितार्यपवित्रधर्मविजयध्वजः तस्य प्रभावश्च क्रमेण कालगर्भेऽस्तमितोऽभूत्। केवलपामरजनग्राह्यपौराणिकाचारास्सर्वत्र व्याप्ता बभूवुः। तत आर्याणामाध्यात्मिकशक्तिः पुरुषार्थप्रवणता च विनष्टासीत्। तत्त्वज्ञानं विनश्य मिथ्याज्ञानं ववृधे। अन्योन्यसहकाराभावेन प्रकल्पितगुरुलाघवभावेनासूयापि लोके प्रवृद्धा। आत्मतन्त्रा या भारतीयार्यजातिः पुरैकदा यावत्प्रपञ्चस्य स्वातन्त्र्यसन्देशमदात्, सैव भावदास्यवशा भूत्वा निर्वीर्याऽभवत्। अनुस्यूताचारवशात् श्ववृत्तितुल्या सेवावृत्तिः आर्यजातिं कृपणां कृत्वा अपयशःपङ्के

न्यपातयत् । भूयो वास्तविकदिव्यतत्त्वज्ञानदीधितयो यदा दिक्षु भासन्ते तदैव आर्यजातेः दास्यविमुक्तिः भवति । तत्त्वज्ञानमेव पारतन्त्र्याब्धितरणे नौकायते । तस्य विशेषतः प्रजातन्त्रेण आलम्बनेन भवितव्यम् ।

अस्य वेमनयोगिनः तत्त्वशास्त्रे मनश्शुद्धिविरहितमूर्तिपूजातीर्थयात्राश्राद्धाद्याचाराणां च स्थानं न दृश्यते । विना दैवोपास्तिं, विना सत्कर्माचरणं साक्षाद्देवएवावतीर्य प्रजानां कष्टनष्टानि व्युदस्यतीति अलसानां मिथ्यावादस्य प्रसक्तिर्नास्ति । सत्यशान्त्यहिंसादयाशौचदैवचिन्तादिसद्गुणानां नित्याचरणे यदा स्थानं कल्पयितुं शक्नोति, तदैव तेषां सार्थकता भवतीति एतस्य परमलक्ष्यम् । निखिलप्राणिकोटिषु मानवएव सत्यासत्ये वस्तुतत्त्वं च विमृष्टुं समर्थो बुद्धिमांश्च खलु? आत्मनः कष्टकाले करावलम्बं दत्वा आनन्दभोगानुभवत्यर्थं सर्ववस्तुजातं कल्पयित्वा साहाय्यं कुर्वतो विश्वस्य विश्वसाक्षिणो विश्वेश्वरस्य कृतज्ञताप्रदर्शनमेव मानवस्य नित्यव्रतं हि । आत्मसाक्षिगुरुबोधेन निवृत्ताज्ञानतमसः सन्तः ज्ञानभानूदयेन तत्त्वं गृहीत्वा बन्धैः दुःखैश्च विमुक्ताः शाश्वतानन्दपरिपूर्णाश्च भवितुं स्वस्वरूपानुसन्धानसाधनमेवैतद्ग्रन्थलक्ष्यम् ।

अमलिनेन चित्तेन एतद्ग्रन्थस्थविषयान् स्वीकृत्य प्राज्ञाः इतोऽधिकपवित्रोद्ग्रन्थरचनार्थे आवयोः धृत्युत्साहौ चिकीर्षवः आशीर्भिः अनुगृह्णन्तु भवन्त इति बुधान् प्रार्थयावः ।

श्रीरामनृसिंहमूर्तिकवी

(गन्धं श्रीराममूर्ति, इरिंकि नरसिंहमूर्ति ।)

# श्रीरामनृसिंहमूर्तिकविवरौ ।

(शतावधानिनौ, उभयभाषाप्रवीणौ, गद्वालसंस्थानास्थानपण्डितौ)

विद्रुद्रुक्दार्तिसंहरणकृद्योगो ययोर्वर्तते
लोकाराधनतत्परौ खलजनव्यापादनव्यापृतौ ।

लोकेस्मिन्भवतेरतुस्सुमहि प्ररू च यौ
तौ श्रीरामनृसिंहमूर्तिविलसत्संज्ञौ जयेते

Blessed be the twain incarnations
Of graceful Rama and terrible Narasimha,
Who, like the sacred Sri, symbolise
The two-faceted Sovereign Power
That conserves what is good and lovely
And destroys what is evil and ugly.

# AN APPEAL

## VEMANA'S LIFE AND TEACHINGS

The poet-sage, Vemana embodied his moral and philosophical teachings in simple verses, using the popular Telugu idiom of his day, for the enlightenment of the masses steeped in ignorance. We now place before the reading public a Sanskrit rendering of those verses into the *anustup* metre.

In the Telugu language "anna" is a term of endearment. Thus Vema has come to be affectionately called Vemanna or Vemana.

He was born at Kondavidu on the full-moon day of the month of Kartika in the year Nandana of the fourteenth century of the Christian era. His mother was Mallamamba. He was the third son of King Komaragiri Vema who ruled over the territory of Kondavidu from 1386 to 1396 A. D., and the youngest brother of King Ana Vema who succeeded his father in 1396 and held sway till 1424 A.D. Tradition has it that Vemana was a co-disciple to the great poet, Bammera Potana under Soma Guru with whose aid he drank deep in the literatures of Sanskrit and Telugu and that after enjoying princely pleasures for about twenty years and having seen the decline and fall of the Reddi Kingdoms he became disillusioned and having renounced all material entanglements, lived a life of unblemished spirituality singing his mundane and spiritual experiences till he finally laid down his earthly body at the village of Katarupalli at the age of sixty eight years on the twenty fourth day of the month of Chitra in the year Sarvari.

# LITERATURE AND ITS EXTENT

In Telugu the words "Reddi' and 'Kapu" mean the same as the Sanskrit words "Raat' and 'Palak" (Ruler and protector). From the suffix of Bhupala associated with the names of Vema and Krishna Rama as Vema Bhupala and Krishna Rama Bhupala, it is evident that the names of the members of the ruling dynasty of Kondavidu to which our Vemana belonged were suffixed, as a matter of course, with the honorific term, *Bhupala.*

Peda Komati Vemana,the author of the Sanskrit commentary called Sringara Deepika on the 'Amaruka Kavyam', and of the 'Sapta Sati Saram', commentary on the Gadha Sapta Sati came from Vemana's family. Vamana Bhat the reputed author of the Sanskrit drama, "Parvateeparinayam", popularised the life-story of Peda Komati Vemana through his work, called Vemabhupaleeyam. Kumaragiri Bhupala wrote in Sanskrit the well-known Vasantarajeeyam. Kumaragiri's son-in-law, Kataya Vema is the author of Sanskrit commentaries on the dramas of Kalidasa. The ruling Reddi family of Kondavidu was thus resplendent with renowned scholars and reputed poets. It was owing to the cultural eminence of this family that the court of Kondavidu held an attraction to such great Andhra Poets like Erra Praggada and Srinatha. These facts prove indisputably that Vemana was himself a scholar of no mean order in Telugu and Sanskrit

The Telugu metrical form called " Ataveladi" helped Vemana to bring out his profound thoughts with natural ease and elegance as the *Anustup* metre provided a means of straight and unhindered expression to Sanskrit poets. He enshrined the most intricate and abtruse metaphysical ideas of the various Upanishads and other philosophical

treatises in the simple and popular spoken idiom of his day. His skill in the art of employing simple but meaningful expressions excites the admiration of scholars. No doubt in his writings we meet here and there, with high sounding Sanskrit words and phrases as *Manineemanoja mandiranandykaloludu* (revelling in thoughts and acts of unbridled concupiscence), *Urdhvaloka sukhamu* (the happiness of heavenly life) *Abhijatyamadamu* (Pride of blue blood) and *Viswadabhirama*, (Beloved of the Universal Benefactor) Nevertheless his Telugu style is suave and simple as the Sanskirt diction of the Bhagavadgita. There are also a few examples of intricate rhymings which the writers on poetics usually refer to-such as the rhyming of *jna with mka* of *A* with *Prana* and of *Rigyazu* with *Yogya.* While the rest of the Telugu writers hold *geemu* as the Telugu derivation of the Sanskrit words *griha* and *geha*, Vemana spells it as *guramu.* These peculiarities come prominently to the notice of the readers throughout his writings.

However, the questions of Vemana's descent and locale or the peculiarities of his poetic diction are not of primary interest to us. Our object of enjoyment is the priceless wisdom clothed in his verses. He was not a poet by profession. His songs burst forth from the depth of his soul under a natural impulse dynamised by unusual and insufferable circumstances. The main repository of the impromptu verses was the untrained memory of his disciples who gathered around him, not to become pandits of literature, but merely to be enlightened by his teachings. When such were the conditions, when writing materials were too meagre to be thought of, it is quite probable that his original verses might have suffered, in course of time, from many alterations, interpolations and excrescences. Failing to recognise

even this naked truth,some derive satisfaction in deriding Vemana's ideas as queer and his language as unelegant.

The self and ego permeate all the phenomena. The ego projects itself out as dead matter and is unreal, while the self constituting truth, knowledge and bliss is real. This basic truth is explained very frequently in Vemana's verses. He denounced casteism and religious sectarianism with all the vehimence of his nature; yet, there are some persons who do not hesitate to read Saivite Sectarianism into his verses from the occurrence of the word Siva, eventhough the poet used it merely to connote grace and auspiciousness. What does praise or abuse matter for such a sage who cared little for his mundane existence or physical pleasures and who was too engrossed in the contemplation of the spirit to find time to court adulations or shun indictments? As a cuckoo breathes forth its melodies from the natural springs of its heart, so did Vemana sing his spiritual songs without the slightest tinge of self-conceit.

Every Andhra knows Thyagayya and Vemana as the torch bearers of spirituality, who not only realised the highest ideal of their earthly existence, but worked for the emancipation of the ignorant by disseminating seeds of wisdom - the one through his musical songs and the other through his metrical verses. According to a traditional belief, Thyagayya was born of the spirit of Narada and Vemana of that of Sanathkumara. The songs of Thagayya got into the mouths of persons whose enthusiasm for music was not matched by a regard for literary proprieties and acquired several blemishes which have since been cleared by the labours of Telugu and Sanskrit scholars. The songs collected by these scholars now number more than sixteen thousand and it is admitted

that they contain the essence of the Upanishadic wisdom. The literature of Vemana met with the same fate as that of Thyagayya. Nevertheless, since 1825, renowned scholars have done their best to recover and resuscitate the writings of Vemana and through their labours he is now widely known as a poet and a scholar. His verses have been translated into Tamil, Canarese, English, Persian etc. Scholars like C. P. Brown, Cambell, Macclin Panchagnula Adinarayana Sastri, Venkata Parvateeswara Kavulu, Varadhacharya, Vanguri Subba Rao, Kattamanchi Ramalinga Reddi, Kurma Venkatareddi Naidu, Raghupati Venkataratnam Naidu and Rallapalli Ananta Krishna Sarma, and Publishers like Thyagaraja Chetty Company and Vavilla Company have worked hard to bring to our notice the beauties of Vemana's literature. His verses, which have been collected so far, number more than 5000.

The noble sayings of great men have gained wider publicity by being translated into Sanskrit. Therefore we have thought it desirable to revise and translate into Sanskrit, in the *anustup* metre, the verses of Vemana and publish them in batches of a thousand each. We now place in the hands of readers the first volume containing one thousand verses under the title, VEMAGITA. Our source-book for these verses is the edition published by the Vavilla Press. We invite suggestions from generous readers. The errors that might have crept into the present edition would be rectified in the next one.

Subsequent to the fifteenth, century some of those poets who treated philosophical subjects have commemorated the name of Vemana in their books with a sense of admiration for him. They are Edapati Errapraggada,

the author of Malhana Charitra', Lakshmana kavi, the author of 'Ekamralinga Sataka', Pingali Erranarya, the author of 'Thobhya charitra', Sivayogeendra, the author of 'Anyavada Kolahala' and Turaga Rama Kavi, the author of 'Nagara Khanda'. No writer of romance has referred to the poet-sage.

Ordinarily, the writers of romance write to feed their patrons with coprological themes for earning earthly reward. The poets who deal with spiritual matters use their artistic inspiration as an aid to themselves for contemplating truth and untruth and as a means for illuminating the souls of the ignorant by infusing into them a sense of the Eternal. The spiritualist, who pays scant attention to the earthly potentate and to the rewards and honours he may bestow, often suffers from neglect and oblivion.

To the spiritualist the various limbs of the body are just what they are-made up of so much flesh and blood, phlegm and lymph and fat and bone- and his injunction is to beware of Cupid's poisonous arrows. To the romantic poet the eyes are beautiful like lotuses, the gait is graceful like the swan's, the neck is shaped like the conch, the words are sweet like honey, and from the lips springs the very ambrosia which is the mead of Gods; and his suggestion is that the titillation of love should be the desideratum of life.

Such erotic poets play upon the natural weakness of man and madden him more and more until he reaches a stage where redemption is impossible. If a blind man chooses another of his kind for his guide, in no time will both land themselves in a ditch. What is sour, tastes sweet in the mouth of a cobra-bitten man. Similarly, the deluded mind tastes ambrosia in the gall of saliva,

It cannot see the natural beauty of the lotus and conch but in the context of its sexual conception. Sex is so pervasive that man projects it in his mental associations even to the inanimate objects like the sun and the moon and the mountains and the earth. When he says that love is blissful should he not take into its purview the selfless love of the mother and the father? Why should he delimit its range to the propensities of sex alone ?

The rulers and scholars alone can lift humanity from the slough of ignorance. If they have lost their bearings and fallen into degradation, what will be the fate of the common man ? It is not far from true that the rulers of mankind with the exception of a few like the Buddha and the Emperor Asoka, have wasted their lives in sin and sensuality. If the spiritualist-poets are left out of the picture, can our romantists who are enjoying an unduly inflated importance substantiate the common belief that the Indians have done so much for development of metaphysical sciences-as the Westerners for the physical sciences ?

The spiritualist-poet cares little for the protection that an earthly ruler can afford. God is his prop; he lives always in communion with the Omnipresent Bliss having subdued the conflicting elements of his nature. How can the ruling magnates or their subjects, whose knowledge is limited to a few worldly matters understand and appreciate the transcendentalist ? The poets that could bend their thought currents to suit the tastes of the rulers have come to enjoy their gifts of free-holdings and other rewards. This is the state of affairs in our topsyturvy world.

Though the poetry of Vemana is full of literary graces and figures of speech like similes and metaphors,

it was not till his works had been translated into different foreign languages, by well-informed scholars like C. P. Brown, that the poet and his poetry came to the notice of our intelligentsia. We can well imagine what would have happened to this literature if those scholars had not spent their labours on the subject.

Addressing himself as his own listener, Vemana popularised through his verses the highest transcendental wisdom culled from the Upanishadic lore. The basic truth explained in his writings is that the objective world is but a manifestation of Brahman.

We see in Vemana's writings a keen eye for the beauties of nature,a deep knowledge of the creative processes, a scholarly treatment of the language, a cultivated purity of thought, a pleasant imagination, an ability for picturesque portrayal, a dexterity in handling similies, a power to reach the readers' sensibility, a clear understanding, a simple and natural expression and an unswerving devotion to the service of humanity—these are the qualities that go to make a true poet.

The great Vedic lore that had once filled the human mind with light and joy and the banner of the Aryan Dharma,that had once flown aloft, lost their chastening influence and, as ages passed, fell into utter oblivion giving place to the polity of the *Puranas* which required no strenuous effort to understand or follow. This transition resulted in the loss of the spiritual energy and the social solidarity, which were characteristic of the Aryan race. Real wisdom fell to ruins wherefrom sprang up chimerical fancies. The ideas of human equality and fraternity disappeared giving rise to social inequalities, intolerance and friction. The Aryan race,that once held the torch of freedom of thought and action,

stooped to imbecile imitation. Blind orthodoxy superseded reason and the most despicable intellectual slavery throttled the soul and hurled down the race from its pedestal of glory. The race cannot come to its own, until it eschews all the delusions born of ignorance and inertia, and revitalises itself with the manna of true wisdom. It is that true wisdom that the reader should crave for.

In the ideal world of Vemana, there is no place for hypocritical idolatries, thoughtless pilgrimages and ritualistic formalities. He did not subscribe to the belief that God would automatically take an incarnation for the easy redemption of lazy persons. He taught, again and again, that man's path to his redemption lay through truth and nonviolence and his own mercy and self-realisation. Of all the creatures man alone is endowed with the faculty of critical reasoning for distinguishing truth from untruth. Should he not be grateful to the all-pervading - Omniscent Lord who is the ever wakeful protector in times of distress and the all-giving Beneafctor in times of need ?

The aim of this book is to help the seekers in liberating themselves from the bonds of ignorance and illuminating their path with wisdom on their march to self-realisation. We hope that the blessings of generous and enlightened readers will give us strength and encouragement to be more serviceable to the cause of sacred literature.

**Sanskrit Poets,**

G. Srirama Murty and I. Narasimha Murty.

*(Translated by Sri K. Narasimha Raju)*

# VEMANA, THE REFORMER

Vemana lived at a time, when India was passing through the darkest period of her history. The Hindu society had been cut up into a thousand fragments. The educated classes were more ignorant than the uneducated masses. An extraordinary situation indeed! How much Vemana was irritated by this unnatural condition can be seen from his saying that a washerman is greater than an educated man.

In his own way, Vemana tried to show light to the society that was steeped in darkness. He condemned the social evils in the sharpest terms. He was not a mere wishful poet or an arm-chair philosopher. He led the active life of an avowed reformer and must have braved all the perils of an enthusiast. He was a precursor of Raja Rama Mohan Roy and Veeresalingam Pantulu. When a proper history of the reform movement in India comes to be written, he will, no doubt, occupy a very conspicuous place in it.

The Andhra masses have always had a spirit of veneration for Vemana. What the work of scholars has done, in the later years, is to enlighten the educated classes about the noble teachings and venerable personality of Vemana of whom they have been pitiably ignorant.

Sri G. Sriramamurty and Sri I. Narasimhamurty have rendered remarkable service to the cause of the Indian culture by translating Vemana's literature into the Sanskrit language which is the common heritage of every Indian. My admiration for Vemana's spirit of enquiry and love of an enlightened life has made me bold enough to undertake to render into English the verses not covered by Mr.C.P. Brown's translation. Even to a modern reader the verses of Vemana are really a treasure-trove of thought-provoking ideas.

K. Narasimha Raju.

## आदरोक्तिः ।

इमौ वेमगीतारचयितारौ श्रीरामनृसिंहाभिधेयौ शतावधानिनौ (संस्कृतान्ध्रभाषयोरनर्गलनिरवद्याशुकविताप्रबन्धचातुरीधुरीणौ) उभयभाषाप्रवीणौ (आन्ध्रविश्वविद्यालयप्राच्यभाषापट्टभद्रौ) श्री गद्वाल संस्थानास्थानकविवरेण्यौ (महाराज्ञ्या आदिलक्ष्मीदेव्याः परिपालनकाले युवराजा साहेब कृष्णराममूपालेन गौरवसमर्पितास्थानकवियोग्यतापत्रौ) व्यासप्रोक्तसंस्कृतभागवतसंहितां सलक्षणया शैल्या यथातथमान्ध्रभाषायां पद्यकाव्यरूपेणानूद्य चरितार्थतां प्राप्तौ व्यासप्रणीतमहाभारतमध्यभागस्थितां भगवद्गीतां (पूर्वगीतां उत्तरगीतां च) यथावदान्ध्रभाषायां तेटगीतपद्येषु अनूद्य च स्वप्रतिभां आध्यात्मिकानुभूतिं च प्रकटयामासतुः। अपि च महात्मा गान्धी (परिष्कृतश्रीकृष्णावतारतत्त्वम्) इत्याख्यं खण्डकाव्यं स्वतन्त्रभावैः संस्कृतभाषायां विरच्य स्वकीयं भावगाम्भीर्यं सहृदयेभ्योऽदर्शयताम्। एवमेतौ सहृदयलोकस्य इतःपूर्वमेव सुपरिचितौ।

पञ्चदशशताब्दे आन्ध्रयोगी वेमनाख्यः स्वकीययाऽनुभूत्या तत्कालस्थसांघिकदुराचारान् उद्घाट्य आर्थिकव्यावहारिकनैतिक-आध्यात्मिकादिविषयान् संस्करणपूर्वकं यथेच्छमान्ध्रभाषायां आटवेलदिपद्यरूपेण जगौ। तेषु वेमनकविगीतेषु आटवेलदिपद्येषु प्रथमसहस्रं संस्कृतीकृत्य प्रकटय्यच यावत्प्रपञ्चेऽपि वेमनयोगिवरस्य निरुपमां प्रतिष्ठां सम्पादितवन्तौ इमौ श्रीरामनृसिंहमूर्तिकविवरौ अतीव प्रशंसनीयौ ।

अनयोरेवंभूता वेमगीता स्थालीपुलाकन्यायेन मया पर्यवलोकिता। संस्कृतभाषायामनुवदितायाः एतयोर्वेमगीताया अनुवादसौष्ठवं (समूलप्रचुरणात्) विज्ञानां विशदमेव भवति। ततः तदुद्घाटनमप्रस्तुतमिति मन्ये। इयं वेमगीता यासु यासु भाषासु व्याख्याता भवति तत्तद्भाषावेत्तृभिः तत्प्रतिभा सुविदिता भवति । अथ वेमनयोगिनो जीवितं,

साहिती, तद्व्याप्तिः इत्येते अन्ये च अंशा ग्रन्थकर्तृभ्यां कथितपूर्वा एव। ततः पुनरुल्लेखनं चर्वितचर्वणमेव स्यात् । एतत् प्रथमं श्लोकसहस्रं प्रसङ्गशुद्धिविराजमानं सम्यक् मनः प्रविश्य मानवं अज्ञानान्धतमसात् निवर्त्य हृदयपरिवर्तनेन सत्पथानुगामिनं कर्तुं सर्वदा शक्नोतीत्युक्तिर्निर्विवादैव ।

प्रभावप्रकटनार्थं प्रगल्भवचांस्युक्त्वा वृथा कल्पितबिरुदानि धृत्वा पामरजनपठनीयानि यानि कानिचित् शृङ्गारकाव्यानि विरच्य लोलात्मनः प्रभून्प्रजाश्च वशीकृत्य धनं हृत्वा दुरभ्यासवशंगतानां शृङ्गारकवीनां मध्ये एतादृशामाध्यात्मिकसत्कवीनां स्थानं न लभेतेति नग्नसत्यमेव । तथापि पद्यद्यकवित्वयोः भक्तिज्ञाननिजानुभूतिकलिताध्यात्मिकतत्त्वप्रोत्थितभावतरङ्गैः आत्मानन्दायैव स्वयं गानं कृत्वा मुक्तिपथं गतौ आन्ध्रदेशीयौ त्यागयवेमनाख्यौ पुण्यपुरुषौ भासेते । तथैव प्रकृतकवी स्वसुखायैव स्वरचना इति प्रकटयन्तौ अचिरादेव संस्कृतान्ध्रयोः अनेकान् उद्ग्रन्थान् रचयित्वा सर्वेषामपि अभिनन्द्यौ भवतः । जातिमतबाह्यन्यायधर्मसत्यप्रतिपादनायैव उद्दिष्टः अयं ग्रन्थः जनानां मौढ्यतमो निवारयति । नात्र संशयः ।

आन्ध्र्यां तत्रापि व्यावहारिकभाषायां पामरजनसुबोधार्थं पण्डितजनानामपि दुरवगाहानि तत्त्वरहस्यानि निक्षिप्य स्वप्रतिभांवेमनयोगी विशदयामास । व्यावहारिकभाषातः संस्कृतानुवादः अतिक्लेशजनक इति तद्विदां विदितमेव । तमिमं क्लेशकरमनुवादं श्रीरामनृसिंहमूर्तिकवी सहृदयहृद्यं यथातथा साधयामासतुरिति वक्तव्यम् ।

तथाचानयोः सकलभाग्यसन्धानाय भगवन्तं प्रार्थयन् साञ्जलिबन्धमेतौ अभिनन्दंश्च ।

*I. Narayanaswamy*, M. A.,
MAHARAJA'S COLLEGE, VIJAYANAGARAM

ॐ

श्री वेमनयोगीन्द्राय नमः ।

# श्री वेमगीताप्रथमसहस्रे पूर्वार्धम् ।

## समूलं, आंग्लविवरणसङ्कलितं च ।

श्रीरामनृसिंहमूर्तिकविकृत श्री वेमनयोगीन्द्रस्तुतिः ।

---

श्री वेमाह्वययोगिवर्य ! पतितानुद्धर्तुकामो जनान्
तत्त्वार्थं प्रतिपादयन्प्रवचनैः हृद्यान्ध्रपद्यात्मकैः ।
सन्देशं भुवि यं त्वमद्भुतमदाः प्राक् द्राक्तमेवाधुना
गैर्वाण्यां गिरि भाषितुं प्रदिश नो दार्ढ्यं नमस्ते नमः ॥

O Vemana, Prince of sages
Give us sufficient strength and courage
To say in the Sanskrit language
The message of truth you sang
In sweet Telugu in days by gone.

—• नैतिकविभागः •—

आत्मशुद्धिलेनि याचारमदि येलः?, भाण्डशुद्धिलेनि पाकमेलः? ।
चित्तशुद्धिलेनि शिवपूज येलरा?, विश्वदाभिराम विनुर वेम ! ॥

आत्मशुद्ध्या विनाऽऽचारः पाको भाण्डे शुचिं विना ।
चित्तशुद्ध्या विना वेम! शिवपूजा निरर्थिका ॥१॥

Observances void of purity of heart! to what end are they? to what end is the preparation of food without cleaning the vessel? Void of purity of mind, to what end is the worship of God? 1.

2. निक्कमैन मंचि नील्मोकटे चालु, तळुकुबेळुकुराश्ळु तट्टेडेल? ।
चदुव बद्यमरय जालदा योक्कटि, विश्वदाभिराम विनुर वेम! ॥

एकेनालं जातिनीलमणिना किं बहूपलैः ।
रसयुक्तं पद्यमेकं पठितुं वेम! युज्यते ॥२॥

One real and good sapphire is enough, why collect a basketful of glittering, sparkling stones? CONSIDER THEN, is not one verse, if worth reading, sufficient? 2.

3. गाजुकुप्पेलोन गडगुचु दीपंब, देट्टुलुंडु ज्ञानमट्टुलुंडु ।
देलिसिनट्टिवारि देहंबुलंदुन, विश्वदाभिराम विनुर वेम! ॥

काचगोलगतो वेम! यथा दीपो विभासते ।
तथैव विदुषां चापि ज्ञानं देहेऽवतिष्ठते ॥३॥

Even as a lamp shines in a glass vase, thus shineth wisdom dwelling in the bodies of men of understanding. 3.

4. पेट्टिपोयलेनि वट्टिनरुलु भूमि, बुट्टनेमि वारु गिट्टनेमि?
पुट्टलोन जेदलु पुट्टवा? गिट्टवा? विश्वदाभिराम विनुर वेम! ॥

दानधर्मक्रियाहीनैः पुंभिर्वेम! निरर्थकैः ।
जातैः किंवा? मृतैः किंवा? वल्मीके तु घुणैर्यथा ॥४॥

Profitless are those men who will bestow neither food nor drink; what though they be born in the world? what though they die? are not the white-ants of the hillock also born? and do they not die also? 4.

5. तामुगन्नवारु दम्मुगन्नवारुनु, जच्चुटेल्ल दमकु साक्षिकादे ?
ब्रतुकुलेल्ल दमकु ब्रह्मकल्पंबुला ? विश्वदाभिराम विनुर वेम ! ॥

मृतिस्स्वपितृपुत्राणां साक्ष्यं भवति चात्मनः ।
वेम! नृणां जीवितानि ब्रह्मकल्पावधीनि किम् ? ॥५॥

Is not the dying of all those we bring forth and of those who bring us forth, an evidence to us? Shall our life be to us as the eternity of God. 5.

6. एरुकमालु मनुजुडेमेमि जदिविन, जदिविनंत सेपे सद्गुणि यगु ।
गद्दिसि तामरंदु गप्प कूर्चुन्नट्लु, विश्वदाभिराम ! विनुर वेम ! ॥

अज्ञस्त्वधीतिसमये द्योतते गुणवानिव ।
वेम ! पद्मस्योपरिष्ठात् निषण्णो दर्दुरो यथा ॥६॥

Whatever he may read who is devoid of understanding, his virtue continues only so long as he is reading; even as a frog IS DIGNIFIED ONLY SO LONG AS IT is seated on a lotus leaf. 6.

7. वेरुपुरुगुचेरि वृक्षंबु जेरचुनु, चीडपुरुगुचेरि चेट्टु जेरचु ।
गुरिसतुंड्रु चेरि गुणवंतु जेरचुरा, विश्वदाभिराम विनुर वेम ! ॥

कृमिकीटावधश्चोर्ध्वं ध्वंसेते वृक्षमाश्रितौ ।
तथा नाशयतेऽभ्येत्य गुणिनं वेम! कुत्सितः ॥७॥

The root-worm destroyes the tree; the sap- worm destroys the herb: and the backbiter ruins every good quality. •7.

8. उप्पुकप्पुरंबु नोक्कपोलिकनुंडु, जूडजूड रुचुल जाडवेरु ।
पुरुषुलंदु बुण्यपुरुषुलु वेरया, विश्वदाभिराम विनुर वेम ! ॥

कर्पूरं लवणं चैकरूपं भिन्ना रुचिस्तयोः ।
वेमैवं पुण्यपुरुषाः पुरुषेषु विलक्षणाः ॥८॥

Salt and camphor are of one resemblance; but if you examine and try the flavours, their tastes are diverse; thus do the excellent differ FORM OTHER MEN. 8.

9. अनुवुगानिचोट नधिकुलमनरादु, कोंचेमुंडुटेल्ल गोदुव कादु ।
कोण्ड यद्दमंदु गोंचेमै युंडदा, विश्वदाभिराम विनुर वेम ! ॥

अनानुकूल्ये स्वाधिक्यं न वाच्यं वेम ! नम्रता ।
न लोपाय महाद्रिः किं? न याति मुकुरेऽल्पताम् ॥९॥

In an unsuitable place never let us hold oursel-ves superior. To be low is no humiliation. Small is the image of a hill in a mirror. 9.

10. चंपदगिनयट्टि शत्रुवु तनचेत, जिक्केनेनि गीडु सेयरादु ।
पोसग मेलुजेसि पोम्मनुटे चावु, विश्वदाभिराम विनुर वेम ! ॥

यदृच्छया रिपुर्वध्य आत्महस्तगतोऽपि चेत् ।
न हिंस्यात्तं वेम! सम्यग्गच्छेत्युक्तिश्च तद्वधः ॥१०॥

Though a foe worthy of death fall into thy hand, afflict him not; conciliate him by goodness and bid him depart. This is death to him! 10.

11. ताममिंचि चेयदगदेद्दिकार्यंबु, वेगिरिंप नदियु विषममगुनु।
पच्चिकाय देच्चि पडवेय फलमौने, विश्वदाभिराम विनुर वेम! ॥

अविमृश्य कृतं कार्यं मौढ्याद्धि विषमं भवेत्।
लूनश्शलाटुर्विन्यस्तः फलं भवति वेम! किम्? ॥११॥

It is fit to perform no act tardily; if thou hurry it, it will itself become evil. If thou take and cast down a raw fruit, will it ripen? 11.

12. नीख्ळलोन नोड निगिडि तिन्नग बारु, बैट मूरिडैन ब्राकलेदु।
नेल्वुदप्पुचोट नेर्परि कोरगाडु, विश्वदाभिराम विनुर वेम! ॥

जले धावति वेम! द्राक् नौस्स्थले न मनागपि।
अस्थाने तु प्रवीणोऽपि न किंचिदुपयुज्यते ॥१२॥

In the waters a ship will float and swim smoothly: but if out, it cannot crawl even a cubit. Thus where he is not at home, the skilful is of no avail. 12.

13. नीख्ळलोन मोसलि निगिडि येनुगुबट्टु, बैट गुक्कचेत भङ्गपडुनु।
स्थानबलमुकानि तनबलिमि कादया, विश्वदाभिराम विनुर वेम! ॥

जले ग्राहो गजं कर्षेत् स्थलेत्वाकृष्यते शुना।
तत् स्थानबलमेव स्यात् वेम! न स्वीयमण्वपि ॥१३॥

A crocodile while swimming in water will seize AND DESTROY an elephant; but out OF THE STREAM it is discomfited EVEN by a dog. Its might THEN IS local, not individual. 13.

14. कुलमुलो नोकंडु गुणवंतुडुंडेना, कुलमु वेल्यु वानिगुणमुचेत ।
वेल्यु वनमुलोन मलयजंबुन्नट्लु, विश्वदाभिराम विनुर वेम ! ॥

कुले यद्यस्ति गुणवान् तद्गुणैश्शोभते कुलम् ।
वेम! चन्दनवृक्षेण भासितं काननं यथा ॥१४॥

If there be in a tribe one of excellence, the tribe becomes illustrious by reason of his virtues, as the grove is distinguished for the sandal tree therein. 14.

15. पंदि पिल्लीनु पदियु नैदिटिनि, कुञ्जरंबु पेट्टु गोदमनोकटि ।
उत्तमुडगु पुरुषुडोकडु चालडा ?, विश्वदाभिराम विनुर वेम ! ॥

क्रोडी वेम! सकृत्सूते दश पञ्च च शावकान् ।
करिण्येकं तु कलभं पुंसैकेनाप्यलं सता ॥१५॥

A pig will bring forth young at five or ten at a time; an elephant produces but one. Is not then one man truly excellent, enough? 15.

16. एल्लवानिदेल्प नेऽवडैनानु जाल्लु, नोरुल वशमे मुर्विनि नोगु देल्प ।
एटिवंक दीर्प नेऽवरि तरमया, विश्वदाभिराम विनुर वेम! ॥

ज्ञानी सुबोध्यस्सर्वेषां नाराध्यो हि जडस्तथा ।
कस्समर्थो वेम! नदीवक्रगत्यपनोदने ॥१६॥

Any one can instruct a man of understanding, but it is not in the power of others to teach the vile: Is it possible for any one to straighten the bend of a river? 16.

17. अल्पुडेपुड्डु बल्कु नाडम्बरमुगानु, सज्जनुंड्डु बल्कु जल्लगानु ।
कंचुम्रोगुनट्लु कनकंबु म्रोगुना, विश्वदाभिराम विनुर वेम! ॥

अल्पस्साडम्बरं ब्रूते सज्जनस्तु प्रशान्ततः ।
यथा कांस्यं निस्वनते तथा वेम ! न कांचनम् ॥१७॥

The light man will always talk big, but the excellent speaks coolly. CONSIDER, will gold, ring like bell metal? 17.

18. ओगुनोगुमेच्चु नोनरंग नज्ञानि, भावमिच्चि मेच्चु बरमलुब्धु ।
पंदि बुरदमेच्चु बन्नीरु मेच्चुना, विश्वदाभिराम विनुर वेम ! ॥

असाधुं श्लाघतेऽसाधुः अज्ञानी लुब्धमेव च ।
प्रस्तौति शूकरः पङ्कं पन्नीरं वेम ! नैकदा ॥१८॥

The vile countenances (or applauds) the vile, and agreeably to this does the hard miser laud the mind of the fools: the swine delights in mud, will it take pleasure in rose water? 18.

19. गङ्ग पारुचुंड्डु कदलनि गतितोड, मुरिकिवागु पारु म्रोततोड ।
दात योर्चिनट्लुघमुडोर्वगालेड्डु, विश्वदाभिराम विनुर वेम ! ॥

मन्द्रगत्या वहेद्गङ्गा मलकुल्या रवेण च ।
यथा दाता क्षमावांस्स्यात्तथा वेम! न चाऽधमः ॥१९॥

The Ganges flows with a tranquil course, but a foul STREAM rushes with a roar. Thus the base can never be mild as the noble. 19.

20. कानिवानिचेत गासु चीसमु वेट्टि, वेंट दिरुगुटेल्ल वेरितनमु ।
पिल्लि पट्ट कोडि विलिचिन वल्कुना?, विश्वदाभिराम विनुर वेम!॥

वित्तं दत्वाऽसते पुंसे मौढ्यं तत्पृष्ठगामिता ।
वेमाऽऽहूतोऽपि किं ब्रूयात्? मार्जालो धृतकुक्कुटः ॥

If you have given your money to an evil man to follow him about is all folly. if a cat has seized a fowl will it answer to your call? 20.

21. पिसिनिवानि यिंट पीनुगु वेडलिन, गट्टुवुकोलकुनु गासुलिच्चि ।
वेच्चमाये ननुचु वेक्किवेक्किेड्चुरा!, विश्वदाभिराम! विनुर वेम! ॥

शवे भूते लोभिगेहे धनं दत्वेन्धनादये ।
'अहो! मम धनं नष्ट' मिति वेम! प्ररोदिति ॥२१॥

If a corpse leave a miser's house when he has given the money for the shroud and bier, "alas for the fees!" cries he, sobbing and sobbing as he weeps! 21.

22. कष्टलोभिवानि कलिमिकिनाशिंचि, बडुगुवाडु तिरुगु बरिणमिंचु ।
तगरुवेंट नक्क तगिलिन चंदंबु, विश्वदाभिराम! विनुर वेम! ॥

दरिद्रोऽनुसरेत्कांक्षन् सम्पदं कष्टलोभिनः ।
वेमाऽनुसृत्य गोमायुः मेषपृष्ठं गतो यथा ॥

Coveting the gains of the hard miser the poor man follows him and bends HUMBLY: this attachment is like that of the fox to the ram. 22.

23. लोभिवानिजंप लोकंबुलोपल, मंदुलेदु वेरे मार्गमुगल्दु ।
पैकमडुग वेग भग्गुनडिचच्चु, विश्वदाभिराम विनुर वेम ! ॥

विषावैर्लोभिनं हन्तुमलमस्ति पृथक्कृतम् ।
स यदाऽभ्यर्थ्यते वित्तं चेद्वाऽऽशु म्रियते तदा ॥२३॥

Would you kill a miser: no poison in the world is requisite: there is another mode: ask him for a penny, and he will instantly fall down dead. 23.

24. कन्नियु गानलेडु कदलिंपडानोरु, विन्नियु विनगलेडु विस्मयमुग ।
संपदकल्वानि सन्निपातकमदि, विश्वदाभिराम विनुर वेम ! ॥

शृण्वन्न शृणुते चेमां पश्यन्नपि न पश्यति ।
रुद्धवक्त्रो धनी तिष्ठत् सन्निपातज्वरी यथा ॥२४॥

Seeing he cannot see, he will not open that mouth OF HIS. Hearing heareth not through arrogance. Such is the disorder of the man of wealth! 24.

25. तानु गुडुवलेक तगवेदि याप्तुल, जेरनीयडट्टि चेनटिपशुवु ।
चेन्निक्लोन बोम्मजेसि कट्टिनयट्लु, विश्वदाभिराम विनुर वेम ! ॥

स्वयं न भुंक्ते चाऽन्येभ्यो न ददातीह यः खलः ।
स पशुर्बैम्मः सस्येषु न्यस्तपाञ्चालिकोपमः ॥२५॥

He who neither eats for himself, nor will let his friends approach, the vicious brute, is like to a LIFELESS image (scarecrow) made and set up in a field. • 25.

26\. पूर्वजन्ममंदु बुण्यंबु सेयनि, पापि धनमु काशपडुटयेल्ल ।
वित्तमरचि कोय वेदकिनचंदंबु, विश्वदाभिराम विनुर वेन ! ॥

पूर्वजन्मनि यः पुण्यं नाऽकरोदिह वेम! सः ।
नाप्नोति धनमन्युप्तबीजः फलमिव ध्रुवम् ॥२६॥

If a sinner in his former brith performed no virtue, all his longing for wealth is like seeking to reap when you have forgotten to sow. 26.

27\. भूपतिकृपनम्मि भूमिजेरचुवाडु, प्रजलयुसुरुदाकि पडुनु विरप ।
एगुरवेय बंति येंदाकनिलुचुरा, विश्वदाभिराम विनुर वेम ! ॥

कृपां भूपस्य विश्वस्य प्रजाद्रोही विनश्यति ।
कन्दुको वेम! विक्षिप्तः कियत्कालं वसेद्दिवि ॥२७॥

He that, relying on the prince, ruins the land, the sorrows of the pecple shall reach him, and at last he shall fall. How long shall the bounting ball retain its elevation. 27.

28\. इनुमु विरिगेवेनि निनुमारुमुम्मारु, गाचि यतुक बंच्चुगम्मरीडु ।
मनसु विरिगेनेनि मरियंटनेर्चुना, विश्वदाभिराम विनुर वेम ! ॥

तप्त्वा द्विस्त्रिरयो भग्नं सन्धातुं लोहकारकः ।
शक्नोति न मनो भग्नं वेम! सन्धीयते क्वचित् ॥२८॥

Though iron break twice or thrice, the smith knows how to heat and weld it. If tho spirit break who shall restore it? 28.

29. नीळ्ळलोनजेप नेरि मांसमाशकु, गाल्मंदुजीक्कि कूलुगादे ।
आशपुट्टि मनुजुडारीति जेडिपोवु, विश्वदाभिराम विनुर वेम! ॥

मांसाकांक्षी जले मत्स्यो बडिशे वेम! बध्यते ।
आशापाशशतैर्बद्धो विनश्यति तथा नरः ॥२९॥

Like as the fish in the waters, through desire of the delicious bait, is fixed on the hook and perishes: so a man if seized with desire is also ruined. 29.

30. नरहरि यनवच्चु नाराय णनवच्चु, मेलुमेलटंचु मेच्चवच्चु ।
कोंगु काशुविडिचि गोब्बुन नीरादु, विश्वदाभिराम विनुर वेम! ॥

वक्तुं शक्या नृसिंहेति वेम! नारायणेति च ।
साधु साध्विति श्लाघोक्तिर्न तथा स्याद्धि दातृता ॥३०॥

He may call Nara Hari or Naryana (a name of the deity), and we may, in seeing him, say Good! Admirable! and laud HIM: but he is in no hurry to open his purse and bestow a farthing. 30.

31. मेडिपंडुजूड मेलिमैयुंडुनु, पोट्टविप्पिचूड पुरुगुलुंडु ।
पिरिकिवानिमदिनि बिंकमीलागुरा, विश्वदाभिराम! विनुर वेम! ॥

औदुम्बरफलं रम्यं तद्गर्भं क्रिमिसंकुलम् ।
तथा भीरोश्च मनसि दार्ढ्यं वेम कथं भवेत् ? ॥३१॥

If you behold the fig (FICUS GLOMERATA) it is like pure gold: if you open its belly and look in, it is all worms. Such is the ostentation of a reserved man. 31.

32. तलनुपागे पेन्न गुत्तुवडमु बोज्ज, चेवुलपोगुलरसि चेरनर्थि ।
शुद्धपशुवटंचु बुद्धिलो नेरुगक, विश्वदाभिराम विनुर वेम ! ॥

मूर्ध्न्युष्णीषं कर्णयोश्च भूषे शाटीं महोदरम् ।
वीक्ष्यार्थी वेम; संयाति पशुरित्यविमर्शयन् ॥३२॥

When he beholds a turban on the head, a well fitting coat, a fair belly and rings in the ears, the beggar approaches him, little supposing what a mere brute THE MISER really is. 32.

33. भूमियंदु बुण्यपुरुषुलु लेकुन्न, जगमुलेलनिल्चु? पोगुलुगानि ।
अंत तरचु दरक राडनाडनुगानि, विश्वदाभिराम विनुर वेम! ॥

यद्युर्व्यां पुण्यपुरुषाः न वसन्ति जगन्त्यहो ! ।
कथं तिष्ठन्ति ? ते वेम ! तत्र तत्र वसन्ति हि ॥३३॥

were the earth void of the excellently virtuous, how should the world stand nor be burnt with FIRE? They are not so very frequent: but only here and there. 33.

34. चित्तशुद्धिकलिगि चेसिन पुण्यंबु, कोंचेमैन नदियु गोदुवकादु ।
वित्तनंबु मर्रिवृक्षंबुनकु नेंत, विश्वदाभिराम विनुर वेम! ॥

चित्तशुद्ध्या कृतं पुण्यं न स्वल्पमपि हीयते ।
कियन्मात्रं वेम ! बीजं न्यग्रोधस्य महातरोः ? ॥३४॥

A good work perfomed with a pure heart, though small, is not trifling. How large is the seed of the banyan AND THE mustard tree! 34.

35. इंटियालि विडिचि यिल जारकांतल, वेंट दिरुगुशाडु वेर्रिवाडु ।
पंटचेनु विडिचि परिगे येरिनयट्लु, विश्वदाभिराम विनुर वेम ॥

विहाय गृहिणीं वेम! जारकांतासु यो रतः ।
स स्यात् सस्यं परित्याज्य उंछग्राहीव भग्नधीः ॥३५॥

He that leaves his wife at home and roams after incontinent women in the world is a madman. It is like leaving his fruitful field to go and gather mere gleanings. 35.

36. राजवरुल केपुडु रणरंगमुल चिंत, परमयुनुलकेल्ल बरमु चिंत ।
अल्पनरुल केप्पु डतिवलपै चिंत, विश्वदाभिराम विनुर वेम ! ॥

राज्ञां रणाङ्गणे चिन्ता परे चिन्ता तपस्विनाम् ।
अधमानां नृणां वेम ! चिन्ता योषित्सु सर्वदा ॥३६॥

The thoughts of kings are perpetually on the battlefield. Eminent saints are constantly thinking on the Most High. But light men are always thinking on women ALONE. 36.

37. तल्लिदंड्रुलपयि दयलेनि पुत्रुंडु पुट्टनेमि? मरियु गिट्टनेमि? ।
पुट्टलोन जेदलु पुट्टवा? गिट्टवा? विश्वदाभिराम विनुर वेम ! ॥

माता पित्रोः कृपा येषां नास्ति तैर्नीचमानवैः ।
जातैर्वेम ! मृतैः किंवा ? वल्मीके तु घुणैर्यथा ॥३७॥

The son who hath no regard for mother and father, what matter though he be born, what though he perish? Do not the white-ants in a hillock come forth and perish AS WELL AS HE? 37.

281. उसुरुलेनि तित्ति यिसुमंत यूदिन, बंचलोहमुलुनु भस्ममौनु ।
पेद्द लुसुरुमन्न वेनुमंट लेगयवा ? विश्वदाभिराम विनुर वेम ! ॥

वेमाप्राणा छमभस्त्री श्वसेच्चेत् लोहपञ्चकम् ।
भस्मीभवति निश्वासैः नोद्यन्त्यर्चींषि किं सताम् ॥२८१

By the groaning of a buffalo hide bellows (in the world) the five metals are calcined: when good men grieve, will not a great flame arise to heaven? 281.

282. चेडुवानि मिगुल जेरचुनु दैवंबु, चेडुपडडु वानि कापदैन ।
जेडिन चेनुजूचि योडयडु मेच्चुना ? विश्वदाभिराम विनुर वेम!॥

भ्रष्टान् भृशं भ्रंशयते विधिर्विपदि नोद्धरेत् ।
नष्टं सस्यं किमुद्वीक्ष्य स्वामी वेम! प्रशंसते ? ॥२८२॥

Utterly does the Deity destroy the wicked. God does not interpose if evil befall him. Will the king be pleased at seeing a barren field? 282.

283. एक्कुडैन याश लिनुमडियुंडगा, दिक्कवट्टि नरुडु तिरुगुचुंडु ।
कुक्कनु वले नाश कूचुंडनीय्यदु, विश्वदाभिराम विनुर वेम ! ॥

अत्याशाग्रस्तहृदयो भ्रमते विमतिर्नरः ।
आशा शुन इव स्वास्थ्यं पुंसो वेम! न यच्छति॥२८३॥

When his passions are redoubled, a man is seized with madness and roams the earth. Cupidity makes a man as restless as a dog. 283.

284. तत्त्व मेरुगुवाड्रु दैवंबु नेरुगुनु, सर्वकाममुलनु जंपजेयु ।
गदलि म्रिगुवाड्रु गरळंबु म्रिगुना ?, विश्वदाभिराम विनुर वेम! ॥

यस्तत्त्वज्ञस्स दैवज्ञः सर्वकामान् व्युदस्यति ।
योत्ति रम्भाफलं वेम ! स तु ग्रसति किं विषम् ? २८४॥

He who knows the truth knowss the divinity, and this will enable him to slay all his lusts. Will he who has swallowed a delicious plantain swallow bitter Venom? 284.

285. नीरुळमीद बुग्ग निलचिन यप्पुडु, तल्लु वेगवच्चि ताकुचुंड्डु ।
विडेड्डुकुंड किंत विश्रांति पड्डुदुरु, विश्वदाभिराम विनुर वेम! ॥

याव न्न वीचयो घ्नन्ति तावत्तोयेषु बुद्बुदः ।
भिद्यमाने घटे मूढा भ्रमन्ते वेम ! सर्वशः ॥२८५॥

When a bubble stands on water, a rapid rush in passing destroys it. Alas! what affection man feel for the frail earthen vessel of the body. 285.

286. हेमकारविद्य नेरिगिन वारेल्ल, वेतलबडनियट्लु विद्यचेत ।
तत्त्व मेरुगु वेन्क तनकु जिंतेलरा ?, विश्वदाभिराम विनुर वेम! ॥

यो हेमकारविद्यां तु वेत्ति न व्यथते हि सः ।
जानन्ति विद्यया तत्त्वं ये तेषां वेम ! का व्यथा ॥२८६॥

Like as all those who comprehend the science of alchymy by reason of that skill suffer no more sorrows, so when thou hast learnt the truth thou shalt no more grieve. 286.

287. जीवभाव मेरुग नेडदेन्नटिकिनि मति, दैवमुनु नेरुंग दनकु बुद्धि।
तेज मुदयमोंद दिमिरंबु निलुवदु, विश्वदाभिराम विनुर वेम ! ॥

जीवभावे तु विज्ञाते वेम ! न भ्रंशते मतिः ।
ज्ञाते दैवे रमेत् बुद्धिः तेजस्युत्थे गतं तमः ॥२८७॥

If thou knowest the nature of life, and that it consists in the temporary union of soul and body, never shall thy mind perish in delusion. If thou knowest the deity, wisdom shall shine within thee: after the light hath arisen darkness shall no more remain. 287.

288. परुस मिनुमुसोकि बंगारमैनट्लु, कप्पुरंबु ज्योति गलिसिनट्लु ।
पुष्पमंदु वावि पोसगिन ट्लगु मुक्ति, विश्वदाभिराम विनुर वेम!॥

वेमाऽयस्स्वर्णतामेति स्पर्शेण स्पर्शवेधिनः ।
कर्पूरं ज्योतिषि सुमे गन्धो मुक्तिश्च तादृशी ॥२८८॥

As iron by touching the Philosoher's stone becomes gold: like as camphor unites with the lamp, and both become fire; or like as the odor in a flower is united therewith, such is absorption: It consists in the uniting of our soul with the Divinity. 288.

289. जपमु बाह्यपूज जालजेसिनपिद्प, गपटमु विडलेक कष्टनरुलु ।
मुक्ति नोंदलेक मुनिगिरि तममुन, विश्वदाभिराम विनुर वेम ! ॥

जपं च बाह्यपूजां च कृत्वात्यन्तमनन्तरम् ।
न त्यजन्तश्छलं वेम ! मग्नास्तमसि बन्धिताः ॥२८९॥

After much meditation and external worship wicked men, who cease not from hypocrisy, are unable to attain be atitude, and sink into darkness. 289.

290. ऊर्ध्वलोकमंदु नुचितकर्मंबुन, रूपमेमि लेक रूढिजोन ।
परमयोगि चूचु परमात्मु डितडनि, विश्वदाभिराम विनुर वेम! ॥

यथोचितं चोर्ध्वलोके निराकारं निरन्जनम् ।
परमात्माऽयमित्येवं वेम योगी समीक्षते ॥२९०॥

In the world above, after finishing his holy course, the perfected saint shall in reality behold the great spirit, devoid of all form and say this is He! 290.

291. दान मोसगुकन्न देनंबु मरि हेच्चु, देवगानमुकन्न देलिवि हेच्चु ।
तेलिविकन्न नास देगवेसिनदि हेच्चु विश्वदाभिराम विनुर वेम !॥

श्रेयो दानादिह ध्यानं ध्यानात् ज्ञानं विशिष्यते ।
ज्ञानादाशापरित्यागः सर्वधा वेम ! चोत्तमम् ॥२९१॥

Meditation is of superior merit to the bestowing of gifts as understanding is superior to meditation; and to cut off our lusts is superior even to understanding. 291.

292. गालिलेनि दीपकलिकचंदंबुन, नल्लु सुल्लु लेनि जलधिरीति ।
निश्चलात्म युंडु निर्विकारंबुन, विश्वदाभिराम विनुर वेम ! ॥

यथा दीपो निवातस्थः यथा निर्वीचिरम्बुधिः ।
तथैवात्माऽचलो वेम ! निर्विकारतया स्थितः ॥२९२॥

Like to the flame of a lamp that is placed out of the wind-like to the ocean free from defiling whirlpools- is the unagitated soul when free from change, This is named beatitude. 292.

293. కలుష మెల్ల దెలియ దలంపులకు మూల, మరయ తత్త్వమెల్ల నాత్మబుద్ధు।
తెలిసినందుకు మరి ధీరుడు కావలె, విశ్వదాభిరామ వినుర వేమ! ॥

ज्ञाते समस्ते कलुषे मूलं वेम ! शिरोनतेः।
सर्वं तत्त्वं चात्मजातं ज्ञात्वा धीरो भवेन्नरः ॥२९३॥

Know that sin is always the cause of dropping the head; that all true good originates in the spirit, but to comprehend this requires much firmness. 293.

294. అడవిదిరుగలే దదాకాశమున లేదు, అవని దీర్థయాత్రలందు లేదు।
ఒడలు శుద్ధిజేసి యొడయని జూడరా, విశ్వదాభిరామ వినుర వేమ!॥

नारण्येनान्तरिक्षे वा नोर्व्यां नो तीर्थभूमिषु।
पश्य शुद्धां तनुं कृत्वा वेमान्तस्स्थं विभुं शिवम् ॥२९४॥

Though we roam the wilds, sanctity is not in them; nor is it in the sky; nor on earth, in the confluence of holy streams. Make thy body pure and thou shalt behold the king. 294.

295. కప్పురంపు మనసు గాంక్షించు యోగికి, జ్ఞానదీపశిఖయు దా నదించు।
గానవచ్చు నాత్మ క్రమమాణమై నిచ్చ, విశ్వదాభిరామ వినుర వేమ! ॥

कर्पूरसदृशं चित्तं कांक्षिणो वेम ! योगिनः।
ज्ञानदीपशिखा भाति तयात्मा परिदृश्यते ॥२९५॥

The devout man who longs for a heart pure as camphor, shall himself shine as the flame of the lamp of wisdom. By the gradual progress of his soul shall he attain his desire. 295.

296. इंद्रियमुलचेअनेगोंदुचुंडेडु, वेरिमनुजु डेल वेदकु शिवुनि ।
इंद्रियमुल रोसि यीशुनि जूडुडी, विश्वदाभिराम विनुर वेम! ॥

इन्द्रियैस्स व्यथो मत्तः किमन्वेष्टि सदाशिवम् ? ।
इन्द्रियाणि तिरस्कृत्य पश्य वेम ! परात्परम् ॥२९६॥

Why should the fool, who is still agitated by his lusts, seek after God? Forsake your passions, and ye shall see him. 296.

297. कडुपुनिंड सुधनु प्रममुतो द्राविन, बालमीद नेल पारु मनसु ।
तत्त्वमेरुगुवेनुक तदितर मेटिकि ?, विश्वदाभिराम विनुर वेम ! ॥

कुक्षिपूर्त्यै सुधां पीत्वा क्षीरं स्मरति किं नरः ? ।
तथा ज्ञाते वेम ! तत्त्वे तदन्येन ततश्च किम् ? ॥२९७॥

If one have drunk his belly full of nectar, how should his mind run upon milk? When we know the divine essence, to what end are other beings? 297.

298. उत्तमोत्तमुडगु नुचितज्ञु डिलमीद, महिमजूपुवाडु मध्यमुंडु ।
वेषधारि युदरपोषकु डधमुंडु, विश्वदाभिराम विनुर वेम ! ॥

सर्वोत्तमस्त्वौचितीज्ञः मध्यमस्सिद्धिदर्शकः ।
कुक्षिम्भरिर्वेषधारी वेमाधम इतीर्यते ॥२९८॥

The best of the excellent on earth is he who knoweth the truth; he who displays his own greatness is in the middle state and he who wears a religious garb to nourish his belly is the lowest of all. 298.

299. मनसुनंदु मुक्ति मलयुचुनुंडग, मनसु नेरुगलेक मनुजु लेल्ल ।
मनसु नणचलेक मायमै पोदुरु, विश्वदाभिराम विनुर वेम ! ॥

मुक्तिरस्ति मनस्येवमजानन्तो मनो नराः ।
अशक्ताश्च मनो रोद्धुं वेम ! नश्यन्ति सर्वशः ॥२९९॥

Though the principlss in which beautitude originates exist in our own heart, all men who are unable to know their hearts, and to restrain their minds, vanish in death. 299.

300. मनसुमुक्तियनुचु मदिनेरुंगगलेरु, मनसुचेत दगिलि नायमैरि ।
मनसु शुद्धमैन मर्मज्ञुडगु योगि, विश्वदाभिराम विनुर वेम ! ॥

न जानाति मनो मुक्तिरिति तेनैव मोहितः ।
नश्येच्चित्तं यस्य शुद्धं योगी वेम ! स मर्मवित् ॥३००॥

They cannot learn that the heart is the source of perfection; they are entangled in their lusts and perish; he who is converted into pure mind is the saint who knows the great secret. 300.

301. मदि नेरिगिनवानि महि गानमेंदुनु, मदिनेरुंगु नरुडु महिनि नरुदु।
वेदकि तनुवुलोन वेड्कतो निनु जूचु, विश्वदाभिराम विनुर वेम!॥

न पश्यामो मानसज्ञं मनो वेत्तेह दुर्लभः ।
वेमान्विष्य तनौ सम्यक् स त्वां पश्यति निश्चलः ॥३०१

Nowhere do we see one who knows his own heart: he who knows his heart is rarely found. If he search, he shall with joy find thee, O God, even in the body. 301.

308. सज्जनमुल चेलिमि चालिंपगारादु, प्रकृति नेरुगकुन्न भक्तिलेदु ।
पलुन लेट्टिरीति भक्ति निश्चुदुरया, विश्वदाभिराम विनुर वेम ! ॥

न त्याज्यं साधुसाङ्गत्यं अज्ञात्वा प्रकृतिं नृणाम् ।
भक्तिर्नास्ति कथं मूढा भजन्ते वेम ! तं शिवम् ॥३०८॥

Cease not from friendship with the good: till we understand our fallen nature, we have no faith; how shall a sinner attain firmness in faith? 308.

309. इट्टिकनुल ब्रह्म मेट्टु चूडगवच्चु ?, चूचु कनुलु वेरु चूपु वेरु ।
चूपुलोन नुंचि चूडंगवलवदा ?, विश्वदाभिराम विनुर वेम ! ॥

कथं ब्रह्म दृगक्षिभ्यां संद्रष्टुं वेम ! शक्यते ।
पृथक् तदक्षिदृष्टिस्स्यात् अन्तर्दृष्ट्या तदीक्षयेत् ॥३०९॥

with such eyes as these how can we view the Deity? the eyes that see him are different, the vision is diverse. Must not we look to him with an internal eye? 309.

310. दूलमुलनुबोलु दुरवस्थलनु नेलु, रोसि याशलन्नि कोसिवेसि ।
वासनल देलिसिन वाडेपो ब्रह्मंबु, विश्वदाभिराम विनुर वेम ! ॥

दुरवस्थास्स्थूणतुल्या हित्वाशापाशवर्जितः ।
वासना यो विजानाति वेम ! ब्रह्म स कथ्यते ॥३१०॥

He who hates all these evil periods of life that are burdensome as a beam; and who cuts off all his passions; who knows the true value of his feelings, he (go to) is become enduced with the divine spirit. 310.

311. माटलाड वेरे मनसुकोलदि वेरे, ओडलिगुणमु वेरे योज वेरे।
एट्लु कलुगुमुक्ति ? येलागु तनलागु, विश्वदाभिराम विनुर वेम !॥

वचो भिन्नं मनोभिन्नं गुणोभिन्नस्तथा स्मतिः।
कथं वा लभ्यते मुक्तिः ? कथं वेम ! स्वपद्धतिः? ॥३११

Talking is one thing, and the temper of the mind is another; the qualities of the body tend one way, and our intention another! How shall we attain salvation and what path is this we are pursuing? 311.

312. वेलदिचक्कदनमु वेरवैन यीडुनु, दिमुनिकरुणलेक वितगनुंडु।
नीदु करुणलेक नेर्पुलु कोरतावु, विश्वदाभिराम विनुर वेम ! ॥

अप्रसन्ने विभौ तन्व्याः वृथा रूपं नवं वयः।
नैपुणी वेम ! मर्त्यस्य नाभाति तत्कृपां विना ॥३१२॥

As the beauty of a woman and her lovely bloom; if devoid of grace in her husband's eyes, are all unprofitable; so, devoid of thy grace, all our skill is fruitless! 312.

313. एंतकष्टमुंडु नंतपापपुचिंत, चिंतचेत मिगुल जिवुकु मनसु।
चिंतलेकयुन्न जेडनि संपद जूचु, विश्वदाभिराम विनुर वेम ! ॥

यावत्कष्टं पापचिन्ता तावती वेम ! चिन्तया।
मनो जीर्यति निश्चिन्तः पश्येत् भूतिमनश्वराम् ॥३१३

In proportion to a man's difficulties are his wicked devices; by such thoughts the mind is much weakened; if devoid of anxiety, he possesses an imperishable treasure. 313.

314. पंडवेळ चीकटेक्मै युण्डुलु, निंडुकुंड नीरु निलिचियुंटलु ।
बंडिनि परमात्मतत्त्वंबु देलियुडी, विश्वदाभिराम विनुर वेम ! ॥

यथातपे तमो लीनं यथा कुम्भे स्थितं जलम् ।
तथा व्याप्तं वेम ! विष्वक् तत्त्वं तु परमात्मनः ॥३१४॥

Like as when the sun shines clearly, the drakness hides itself; and as when clear water fills a vase; so fully and clearly let us comprehend the essence of the supreme spirit. 314.

315. इंटिलोनि धनमु 'इदि नादि' यनुचुनु, मंटिलोनदाचु मंकुजीवे ।
कोंदुबोडु वेंट गुलकासैननु, विश्वदाभिराम विनुर वेम ! ॥

'इदं ममेति' यद्गेहे धनं तत्सर्वमेवच ।
निक्षिपेन्मृदि वेमाज्ञो नान्ते नयति काकणीम् ॥३१५॥

The wicked wretch considers the wealth in his house as his own for ever, and hides it in the earth; yet he cannot carry a cauri or a farthing with him when he dies. 315.

316. देशवेषमुलनु देटसेयक देवु डात्मलोननुंडु ननगि पेनगि ।
वेस मरसिचूड प्रासंबुकोरकया, विश्वदाभिराम विनुर वेम ! ॥

देशवेषं न विज्ञेया ह्यात्मन्यन्तर्गतो विभुः ।
आवश्यकत्वं वेषस्य ग्रासार्थं वेम ! केवलम् ॥३१६॥

God regards not our country or our garb; he dwells in the soul, intimately entwined there with; an assumed garb is merely worn for the sake of the belly. 316.

317. पर्वतवनवासि परिणाममवर्तन, कूपवासि केट्लु गुरुतुपडुनु ? ।
ब्रह्ममिच्छु वैंट ब्रकुनु डरुगुना ?, विश्वदाभिराम विनुर वेम ! ॥

परिणामदशा शैलवासिनः कूपवासिना ।
ज्ञायते कथं ? मन्त्रः किं योगीन्द्रमनुगच्छति ? ॥३१७॥

How can the conduct-so different from his own-of the hermit who abides in the mountains and wilds be comprehended by him who dwells in the pit of secularity? Will the natural man follow after him whose practice is godlike? 317.

318. अल्पसुखमुलेल्ल नाशिंचि मनुजुंडु, बहुलदुःखमुलनु बाधपडुनु ।
परसुखंबुनोंदि ब्रतुकंगनेरडु, विश्वदाभिराम विनुर वेम ! ॥

अभ्यर्थ्याल्पसुखान्यज्ञो व्यथते बहुदुःखभाक् ।
परमं तु सुखं लब्ध्वा जीवितुं वेम ! नार्हति ॥३१८॥

The man who longs after trifling comforts suffers the grief of many sorrows; it is out of his power to attain the highest of bliss, and live for ever. 318.

319. कडगि वट्टियास कडतेरनीयदु, इडुमलंदुवेट्टि यीड्चुगाति ।
पुडमि जनुल भक्ति पोडमंगनीयदु, विश्वदाभिराम विनुर वेम ! ॥

व्यर्थाशा तरणोपायवारिणी कष्टकारिणी ।
वेमाथ भुवि मर्त्यानां स्याद्भक्त्युदयरोधिनी ॥३१९॥

Vain desire suffers not to attain our end; it only plunges us in troubles, and drags us al[illegible]
it prevents faith from being born in men.

820. धर्म मरसिपूनि धर्मराजादुलु, निर्मलंपुबौढि निल्पुकोनिरि ।
धर्ममे नृपुल्कु दारकयोगंबु, विश्वदाभिराम विनुर वेम! ॥

प्रतिष्ठां धर्ममाश्रित्य धर्मराजादयो ययुः ।
योगस्तारक इत्याहुः धर्म वेम ! मनीषिणः ॥३२०॥

By practising what was right, did Dharma Raj and other warriors maintain their spotless heroism. Righteousness is to all rulers and means of attaining salvation. 320.

821. दानमुलनुजेय धर जेतुलाडक, बहुधनंबु गूर्चि पातिपेट्टि ।
तुदकु दंडुगनिडि मोदलुचेडु नरुडु, विश्वदाभिराम विनुर वेम! ॥

अनिच्छन् दातुमर्थिभ्यो सञ्चित्य बहुलं धनम् ।
वेमान्ते नष्टसर्वस्वः पामरो नश्यति ध्रुवम् ॥३२१॥

He will not move his hands to bestow gifts; he collects much wealth, and buries it ultimately he shall pay penalty; the man shall be ruined root and branch. 321.

322. विनु विवेकमनेडु वितगोड्डलिचेत, नल यविद्ययनेडु नडवि नरिकि।
तेलिवियनेडु गोप्पदीपंबु चेपट्टु, विश्वदाभिराम विनुर वेम! ॥

शृणु वेम ! विवेकाख्य कुठारेणाद्भुतेन वै ।
अविद्याख्याटवीं छित्वा गृहाण ज्ञानदीपिकाम् ॥३२२॥

Hear! if with the admirable axe discrimination, thou cut down the forest of ignorance, holding in thy hand the great lamp that is called understanding. then shalt thou see perfection. 322.

323. पालनीरुक्कमु परग हंस येरुंगु, नीरुपालक्कमु नेमलि केल ? ।
अज्ञुडैन मनुजु डल शिवु नेरुगुना ?, विश्वदाभिराम विनुर वेम ! ॥

क्षीरनीरक्रमं हंसो जानाति न शिखावलः ।
अज्ञः कथं विजानाति ? वेमेह परमं शिवम् ॥३२३॥

The swan alone can distinguish water when mingled with milk; how should the peacock distinguish these fluids? And how shall the ignorant man discern the deity from his own works? 323.

324. कन्नुलंदु मदमु कप्पि कानरुकानि, निरुडु मुंददटेडु निन्न मोन्न ।
दग्धुलैनवारु तमकंटे दक्कुवा ?, विश्वदाभिराम विनुर वेम ! ॥

पश्यन्तोऽपि न पश्यन्ति मदान्धा वेम ! वै मृताः ।
ह्यः परह्योगतेऽब्दे तत्पूर्वे न्यूनाः किमात्मनः ? ॥३२४॥

They cover their eyes with fatness, and cannot see; but are those who were burnt on the funeral pyre (last year, or the year before; yesterday, or the day before) inferior to these, so blind in their pride? 324.

325. एरुदाटि मेट्टकेगिनपुरुषुंडु, पुट्टि सरकुगोनक पोयिनट्लु ।
योगिपुरुषु डेल नोडलु चाटिंचुरा ?, विश्वदाभिराम विनुर वेम ! ॥

नदीं तीर्त्वोन्नतं देशं प्राप्तो नाद्रियते प्लवम् ।
योगारूढः पुमान् वेम ! किमर्थं गणयेत्तनुम् ॥३२५॥

The man who has crossed a river and reached the shore cares no longer for the hide-sewn boat; why should the man who has attained happiness trouble himself about the body? 325.

326. मट्टिकुडवंटि मायशरीरंबु; चच्चु; नेन्नडैन जावदात्म ।
घटमुलेन्नियैन गगनंबदेकमे; विश्वदाभिराम विनुर वेम ! ॥

म्रियते मृद्घटसमा तनुरात्मा न कर्हिचित् ।
पृथग्घटा वेम ! घटा एकरूपो विहाय सः ॥३२६॥

This false body, like an earthen vessel, will die: never shall the soul die; however many vessels there be, there is but one expanse into which they are ultimately resolved. 326.

327. मा यनुचेरसाल मन सनुगोलुसु, भेदमनेडु बोंड बेरसियुंडु ।
इट्टि बद्धजीवि केन्नडु मोक्षंबु ?, विश्वदाभिराम विनुर वेम ! ॥

मायाकारा मनः पाशः भेदबुद्धिस्तु शृङ्खला ।
एतैर्बद्धस्य जीवस्य वेम ! मोक्षः कदा भवेत् ॥३२७॥

We are imprisoned in delusion; our inclinations are as chains; empty distinctions are the shackles attached to us; when shall be the delivernce from this life of bondage? 327.

328. एरुककन्नु सुख मेल्लोकमुन लेदु, एरुक नेरुग नेरवनि केरुकलेदु ।
एरुकसाटि येरुके येरुकये तत्वंबु, विश्वदाभिराम विनुर वेम ! ॥

ज्ञानतुल्यं सुखं नास्ति ज्ञानं वेम ! न वेत्त्यते ।
ज्ञानस्य सादृश्यं ज्ञानं हि ज्ञानं तत्त्वं हि केवलम् ॥३२८॥

In no world is there a blessing greater than wisdom: none possesses wisdom but he who recognizes its value. Knowledge is comparable to itself alone, wisdom is (tated) the chief good. 328.

329. काकुंट देलिय नुत्तमयोगंबु, मनसंबु कलिमि मध्यमंबु ।
आसनादिविधुले यधमयोगंबुरा, विश्वदाभिराम विनुर वेम ! ॥

मौनं स्यादुत्तमो योगः मध्यमो मानसे स्थितिः ।
आसनादिविधानैस्तु वेम ! योगोऽधमस्स्मृतः ॥३२९॥

Quietism is the highest means of attaining absorption; the possession of intellect is the middle grade; postures and other superstitious rites are the lowest degree of worship. 329.

330. मनसुनु निग्रहिंचि मनसुलो सुखियिंचि, कडकु मोक्षपदमु गनुनुवाडु।
चेट्टुवेट्टफलमु चेकूर्कुदुना ?, विश्वदाभिराम विनुर वेम ! ॥

धृत्वा जित्वा मनस्तस्मिन् यस्सुखी मुक्तिमेति सः ।
उप्तवन्तस्तरुं वेम ! न किं गृह्णन्ति तत्फलम् ॥३३०॥

He who undertakes to suodue his heart shall find comport therein: at last he shall see the abode of beatitude (mocsha) shall not he who plants a tree obtain its fruit? 330.

331. माटलाडवच्चु मनसु निल्पगरादु, तेलुपवच्चु दन्नु देलियरादु।
सुरियबट्टवच्चु शूरुडु गारादु, विश्वदाभिराम विनुर वेम ! ॥

शक्नोति वक्तुमन्येषामक्षमश्च प्रबोधने ।
शक्तः कृपाणग्रहणे वेम ! शूरो भवेन्न हि ॥३३१॥

It is easy to talk, but hard restrain to the mind; we may teach others, but cannot ourselves understand; it is easy to lay hold on the sword, but hard to become valiant. 331.

332. गुरुवु चिल्लगिंज कुंभ मीदेहंबु, आत्मकलुषपंक मडुगुबट्ट ।
तेलिसि विरिसेनेनि दिव्यामृतमु तेरु, विश्वदाभिराम विनुर वेम!॥

गुरुः कतकबीजं स्यात् अघः पङ्कस्तनुर्घटः ।
तत्पङ्काधःप्रापणात् स्यात् वेम! ज्ञानसुधोदयः ॥३३२॥

The teacher is the clearing nut; the vessel is this body; if the impurities of thy soul sink like mud; through this separation, caused by wisdom, shall divine nectar be produced. 332.

333. जीवि लोननुंडु स्थिरमुनु गानक, तिरुगु नस्थिरंबु वरुस नम्मि ।
स्थिरमु नस्थिरमुनु देलिय जीविकि मुक्ति, विश्वदाभिराम विनुरवेम!

वेमान्तस्थस्थिरं जीवी नोद्वीक्ष्य बहिरस्थिरम् ।
विस्रभ्याटति मुक्तिस्स्यात् स्थिरास्थिरविदो ध्रुवम् ॥

Unable to perceive the immortality of the soul that is within the living body. he wanders, trusting to that which is unstable; our final happiness (mucti) depends on knowing what is eternal and what is temporal. 333.

334. गतमु जूनमंटे कलगन्न यर्थंबु, नडचुकालमेमि नम्मराद़ु ।
क्षणमुलोनि ब्रतुकु संसारविभ्रांति, विश्वदाभिराम विनुर वेम! ॥

गतं स्वप्नार्थसदृशं वर्तमानं न विश्वसेत् ।
क्षणं हि जीवितं वेम! भ्राम्यते भववर्त्मनि ॥३३४॥

If I say "let me view the fast" it is like a thing seen in a dream: neither can I rely on the time now passing: our attachment to our earthly connections lives but for a moment. 334.

335. तानेवरु नेवरु? तनवारन नेवरु?, तेलिसितेलियलेरु तिक्कलु ।
मरय बसिरिकायपुरुगुपद्धति गाग, विश्वदाभिराम विनुर वेम ! ॥

**को नामात्मा के स्वकीयाः विदित्वा न विदन्ति हि ।**
**कुधियो वेम! नश्यन्ति कार्पासकृमयो यथा ॥३३५॥**

What mean we by "self" or our own people? knowing, they know not, the madmen! they live like silk worm in a cocoon seemingly secure but in reality helpless. 335.

336. चच्चे, चच्चेननुचु जावुकु वगचेड्डु, दीननरुलनेरिं देलुपराडु ।
प्राणिकरय मृत्युबन्धंबु लुंडुना, विश्वदाभिराम विनुर वेम ! ॥

**ये ममार ममारेति शोचन्ते तद्विमूढता ।**
**किं वाच्या? प्राणिनां वेम! कुतो बन्धः कुतो मृतिः ॥**

He grieves for death, crying, "He is dead! He is dead!', the folly of miserable men cannot be told; what, is the soul subject to the bounds of death? 336.

337. जननमरणमुलकु सरिस्वतन्त्रुडु काडु, मोदटगर्तकाडु तुदनुगाडु ।
नडुम गर्तननुट नगुबाटु कादोको!, विश्वदाभिराम विनुर वेम! ॥

**जनने मरणे वेम! न स्वतन्त्रो हि मानवः ।**
**आदौ न कर्ता नान्ते च मध्ये कर्तेति दुर्भ्रमः ॥३३७॥**

Neither in his birth or at his death is he free; he is the disposer neither of his origin or his end Is it not ridiculous to talk of lordship in his intermediate life? 337.

३३८. ब्रह्ममेडनचुचु बलुमारु नंदुरु, वेर्रिमूर्खजनुलु विध मेरुगक ।
ब्रह्म मन्निटंदु बरिपूर्णमै युंडु, विश्वदाभिराम विनुर वेम ! ॥

क्वेदं ब्रह्मेति बहुधा प्रपलंत्युन्मदा जडाः ।
सर्वत्र परिपूर्णं हि ब्रह्म वेम! विराजते ॥३३८॥

Mad and idiotice are those whose perpetually enquiring where the deity resides: God dwells in al: things in his complete fulness: 338.

३३९. पसुलवन्ने वेरु पाल्लेल्ल नोकटे, पुष्पजातिवेरु पूज योकटे ।
दर्शनंबुवेरु दैवंबदोकटे, विश्वदाभिराम विनुर वेम! ॥

पशुवर्णाः पृथक्क्षीरमेकं वेम! सुमाकलेः ।
जातिर्भिन्नापि पूजैका दैवमेकं स्मृतिः पृथक् ॥३३९॥

Kine are of divers colors, but all milk is alike; the speciers of flowers vary, yet all worship is one; systeme of faith are different, but the deity is one. 339.

३४०. पनितोडवुलुवेरु बंगार मोकटे, परग घटमुवेरु प्राणमोकटे ।
यरय विंडलु वेर दाकलियोकटे, विश्वदाभिराम विनुर वेम ! ॥

भूषणानि पृथग्वेम! हेमैकं स्याद्घटाः पृथक् ।
एकः प्राणो भोजनानि पृथगेका बुभुक्षता ॥३४०॥

Worked chasings are various, but all gold is the same; these earthly tenements vary, but the soul is one; yiands are many but hunger is always the same. 340.

341. कानलेडु नुदुरु कर्णमुल् वीपुनु, मेरुगु गानलेडु मेलिमीद ।
तन्नु गानलेडु तत्व मेमेरुगुनु ?, विश्वदाभिराम विनुर वेम ! ॥

नेक्षते निटलं कर्णौ पृष्ठं केशांश्च मूर्धनि ।
नात्मानं वेत्ति किं वेम! तत्त्वं जानाति बालिशः ॥३४१॥

We cannot see our own forehead, our ears, or our backs; neither can we know the hairs of our head; if a man knows not himself, how should he know (tatwam) the deity? 341.

342. तिरिगितिरिगि नरुडु मरलुकोनुटेकाक, अंदुवलन नेमि यासलेदु।
अंतरात्मनिलुपु नंडेपो ब्रह्मंबु, विश्वदाभिराम विनुर वेम! ॥

मोहजाले मुहुर्वेम! सक्तो भवति दुर्मतिः ।
ततः फलं न किंचित्स्मात् आत्मन्येव ब्रह्म केवलम् ॥

A man roams and rambles, and turns back unsatisfied; he has therein obtained nothing his heart desires; he who has fixed unalterably his inmost heart, go to, he is the divinity. 342.

343. चित्तमनेडु वेरु शिथिलमैनप्पुडे, प्रकृतियनेडु चेट्टु पडुनु विदप।
कोर्कुलनेडु पेद्दकोम्म लेंडुनुगदा, विश्वदाभिराम विनुर वेम !॥

शिथिले चित्तमूले स्यात् पतितः प्रकृतिः द्रुमः ।
शुष्यन्ति हि ततो वांछाशाखा वेम! चिरस्थायाः ॥३४३॥

When the mind, which is the root, decays, the tree of our mortal nature falls; then are its great boughs, the affections dried up. 343.

344. तिट्टिकोट्टिरेनि दिरिगि माटाडक, ऊरकुन्न जूड नुर्विमीद ।
बाड्गुबरमात्म बणिपश्चयमा !, विश्वदाभिराम विनुर वेम! ॥

दूषितस्ताडितो वापि यत्किंचिदपि चाब्रुवन् ।
तूष्णींभावं गतो वेम! परमात्मेति वर्ण्यते ॥३४४॥

He who, though reviled or struck, returns it not but remaineth unagitated; behold, on earth he is already become the great spirit; can we fitly describe his perfections? 344.

345. कल्मषंबुपोक कन्पिच देंदुनु, रूप मेव्वरिकिनि रूढितोड ।
तामसं बुडिगिन दगगल्गु ज्ञानंबु, विश्वदाभिराम विनुर वेम ! ॥

अनिर्गते हि कालुष्ये न रूपं द्योतते ध्रुवम् ।
तमस्यपावृते वेम! ज्ञानं नूनं प्रकाशते ॥३४५॥

Unless impurity be removed, to no one can the divine image become truly visible; when passion leaves thee, wisdom shall be thine. 345.

346. नीटिलोनव्रात निलुवकयुन्नट्लु, पाटिजगतिलेदु परमु लेदु ।
माटमाटकेल्ल सनमु कोरुचुनुंडु, विश्वदाभिराम विनुर वेम ! ॥

जले रेखा स्थिरा न स्यात् तथेह च परे सुखम् ।
मनो मुहु र्मुहुर्वेम! कामिता न्यभिवांछति ॥३४६॥

Like as what is written in water remains not, so are all the blessings of this life unstable: why does the empty heart desire word upon word? 346.

347. दोंगतेलिविचेत दोरकुना मोक्षंबु ?, चेतगानिपनुल जेयरादु ।
गुरु डनंगवल्दु गुणहीनु डनवले, विश्वदाभिराम विनुर वेम ! ॥

मिथ्याज्ञानेन किं मुक्तिर्लभ्यते? वेम! दुष्क्रियः ।
न वक्तव्यो गुरुरिति गुणहीन इतीर्यते ॥३४७॥

Can salvation be attained by him who is false hearted? Labour not in works that are fruitless; the fool that thus acts shall never be called a teacher. 347.

348. आशल देगगोसि यनलंबु जल्लार्चि,गोचि बिगियबेट्टि कोप मडचि ।
गुट्टु मीरवाडु गुरुवुकु गुरुवुरा ?, विश्वदाभिराम विनुर वेम ! ॥

कौपीनवन्तश्छिन्नाशाः प्रशान्ता गतमन्यवः ।
वेमातीतरहस्या ये गुरूणां गुरवो हि ते ॥३४८॥

He who has cut off his desires, who has quenched the fire of passion, who has bound up his loins, and crushed all anger; he who has attained to the great secret is the teacher of teachers. 348.

349. आश लनेडुत्राळ्ळ नमर गोयगजेसि, पारवैनगानि परमुलेदु ।
कोवकु तिडियाश जिक्कि चच्चिनयट्लु,विश्वदाभिराम विनुर वेम!॥

आशापाशान् भृशं छित्वा न विसृज्य परं न हि ।
आहाराशावशो वेम! मूषिको म्रियते खलु ॥३४९॥

Unless thou cut away the cords of desire and cast them off, there is no heavn for thee; thou shalt perish like a mole ensnared by the love of food. 349.

350. सूक्ष्मरूप मेरिगि सुख मोंदगलेक, बहुळमुगनु जदुवु बड्डुचुनरुलु।
चावुने टेरुगनि चदुवेल जदुवडो !, विश्वदाभिराम विनुर वेम! ॥

सूक्ष्मरूपमविज्ञाय सुखमप्राप्तुवान्युवा ।
बह्वधीते वेम! विद्याममृतां न पठेत्कथम् ॥३५०॥

A young man who is unanle to see the recondite form of God can enjoy no comport, but studies excessively; why does he study that which would teach him how to die. 350.

351. तनु वदेवरिसोम्मु तन दनिपोषिंप,धन मदेवरिसोम्मु दाचुकोनग।
प्राण मेवरिसोम्मु पायकुंडगनिल्प, विश्वदाभिराम विनुर वेम! ॥

वेम! भर्तुं स्वीयमिति कस्य स्वं देहमीदृशम् ।
कस्य स्वं द्रविणं गोप्तुं प्राणः कस्यावितुं सदा ॥३५१॥

To whom does your body belong which you nourish so carefully? whose is your wealth that you should hide it? to whom does the soul appertain that it sould not leave the body. 351.

352. जीवि जंपुटेल्ल शिवभक्ति दप्पुट, जीवि नरसिचूड शिवुडुगाडे।
जीवुडे शिवुडनुचु सिद्धमु तेलियुमु, विश्वदाभिराम विनुर वेम! ॥

शिवभक्तिर्जीववधो जीवोनाम शिवः खलु ।
अभेदं जीवशिवयोः वेम! जानीहि तत्त्वतः ॥३५२॥

All killing of animals is a sin against Siva: consider all animals as forms of the deity; indeed every living creature if sinless is as a God. 352.

353. कोंकणिवु बोव कुक्क सिंगमु कादु, काशिकोव बंदि गजमुगादु ।
वेरुगुणमुवाडु विधुंडु काडथा, विश्वदाभिराम विनुर वेम ! ॥

न सिंहः श्वा कोंकणगो काशीगो न गजः किटिः ।
पृथग्गुणं गतो मर्त्यः वेम ! योगी न कथ्यते ॥३५३॥

Though he roam to concan no dog will turn into a lion; going to Benares will make no pig an elephant; and no pilgrimage will make a saint of one whose nature is different. 353,

354. ईतकंटेलोतु नेंचंग बनिलेदु, चावुकंटे गीडु जगतिलेदु ।
गोचिपातकंटे गोचिंबु मरिलेदु, विश्वदाभिराम विनुर वेम ! ॥

तरणान्नास्त्यगाधत्वं मरणान्नास्ति दुर्व्यथा ।
कौपीनान्नास्ति दीनत्वं वेम ! किञ्चिदपि ध्रुवम् ॥३५४॥

If you know how to swim, there is no necessity to sound the stram; if you know how to die; there is no grief in world form which suicide will not release you. If you are content with a girdle, no poverty will distress you. 354.

355. जाणलेनयट्टि चपलाक्षतालुल, वलपु कांसि चूचि भ्रमयनेल ? ।
बयलिरूपु लेल्ल बरिकिंपगानेल ?, विश्वदाभिराम विनुर वेम ! ॥

प्रौढानां चञ्चलदृशां विभ्रमान्वीक्ष्य किं भ्रमैः ?
वेम ! बाह्यानि रूपाणि किं निरीक्ष्य वृथाश्रमैः ॥३५५॥

Why, at viewing the charms of the roguish swimming eye, do we become enamoured of its light? why should we so delight to view all external beauty? 355.

356. तरचु जदुवजदुव दर्कवादमेकानि, दिव्यज्ञान मचट देटपडदु ।
पसिरिकाय पुरुगु पगिदिनि जेडिपोवु, विश्वदाभिराम विनुर वेम!॥

बह्वधीतेस्तर्कवादः न तत्र ज्ञानमव्ययम् ।
कोशकारः कृमिरिव वेम! तादृग्विनश्यति ॥३५६॥

Excessive study leads only to disputatious talking; a man does not hereby attain divine knowledge; he is entangled therein like a silk-worm in its shell. 356.

357. एद्दुकन्न दुन्न येलागुतक्कुव ?, एरुपुलेकपोयि तरिगे विलुव ।
नेर्पेरुगनिवानि नेरयोगियंदुरा ? विश्वदाभिराम विनुर वेम ! ॥

कथं न्यूनो बलीवर्दान्महिषो वेम! केवलम् ।
नैश्यमेवात्र हेतुस्स्यादज्ञो योगी विमुच्यते ? ॥३५७॥

In what respect is it that buffalo is so inferior to the ox; what is its price lower because it is not red but black! then let no one be called wise who is devoid of understanding his intrinsic value alone should be considered. 357.

358. सुतुलु सतुलु माय सुखदुःखमुलु माय, संस्कृतियुनुमाय चावुमाय,
मायनुकुर्कित माय गल्पिचिति, विश्वदाभिराम विनुर वेम ! ॥

माया वेम! सुता जायास्सुखं दुःखः भवो मृतिः ।
कल्पितैतावती माया मृषा जीवितसङ्गतौ ॥३५८॥

Sons and wives are a mere delusion; pleasure and pain are a deception a family and affections we feel are unreal: thou hast filled this delusive life with empty forms. 358.

359. सिग्गुभरलमनि सुष्टिलोमलिवारु, वेर्रिवेमनगनि वेरगुपडिरि ।
तनकुमलुगुसिग्गु दैव मेरुंगुरा, विश्वदाभिराम विनुर वेम ! ॥

ह्रीमन्तो वयमित्येवं वीक्ष्य वेममसाधिकम् ।
विस्मितास्स्युर्जना वेम! दैवं वेत्ति निजत्रपाम् ॥३५९॥

Those who consider themselves decent and reputable look upon the mad Vemana with astonishment, ah, the deity knows his real humility while he appears only to deride others! 359.

360. तन्नु दा नेरुगडु तानेव्वरिकि नेर्पु, प्राल्लुमालितिरुगु पशुवुकोलुकु।
काह्लुकोरकु कादे ? कर्ममुल्गट्टुनु, विश्वदाभिराम विनुर वेम॥

न वेत्ति स्वयमात्मानमन्येभ्यो बोधते कथम् ? ।
पशुतुल्योऽलसो वेम! बध्नात्यर्थाय कर्मसु ॥३६०॥

Being ignorant of himself, how shall he instruct others? he roams about idly, no better than a brute, and performs religious ceremonies for the sake of pitiful fees. 360.

361. एंतो चदुवु जदिवि येन्निविननुगानि, हीनु डवगुणंबु मानलेडु ।
बोग्गु बालगडुग बोवुना मलिनंबु ?, विश्वदाभिराम विनुर वेम॥

बह्वधीत्य बहुश्रुत्या नैच्यं त्यजति नाधमः ।
क्षीरेण धौतमङ्गारं नैल्यं किं वेम मुञ्चति ॥३६१॥

Let him study what he will, or listen to the holy taxts, the sinner will not relinquish his vile nature. Though you wash a coal in milk, will its blackness be removed? 361.

362. आलुबिड्डलु धन मरयु दलियु दंड्रि, कै मनुजुडु मिगुल गष्टपडुनु।
तनकु नेवरुलेरु तानु ब्रह्मुगन्न, विश्वदाभिराम विनुर वेम ! ॥

पितृभ्यां दारपुत्रेभ्यो धनाय व्यथते नरः ।
वेम! ब्रह्मणि सन्दृष्टे नात्मनस्सन्ति केचन ॥३६२॥

A man labours to gain wealth for the sake of his wife his child, his mother, and his father But if he looked to God, these should no longer. exist so as to agitate him. 362.

363. आस पापजाति यन्निटिकं टेनु, आसचेत यतुलु मोसपोरे ? ।
चूचि विडुचुवारु शुद्धात्मु लेंदुनु, विश्वदाभिराम विनुर वेम ! ॥

सर्वेभ्यः पातकिन्याशा मुनयो वञ्चितास्तया ।
वेमाद्वीक्ष्य विमुञ्चन्ति तां शुद्धात्मान एव हि ॥३६३॥

Covetousness is a sin of the [illegible]; through lust have not even hermits b[illegible] he who hath vi[illegible] and relinquish[illegible] the pure spirit!

364. निजमुलाडु[illegible] निजमुलाडरादु नीचुतोड ।
निज[illegible], विश्वदाभिराम विनुर वेम ! ॥

सत्यव्रतं ज[illegible] सत्यं ब्रयान्न दुर्जनैः ।
महात्मनेव [illegible] वेम! सत्यं वदेन्नरः ॥३६४॥

He who speaks rough plain truth is reproached by all the world. Truth should not be declared to the vile; but if you meet with a trully great soul, declare the truth to him. 364.

365. भूमि नादियन्न भूमि फक्कुन नव्वु, दानहीनु जूचि धनमु नव्वु ।
कदनभीतु जूचि कालुंडु नव्वुनु, विश्वदाभिराम विनुर वेम ! ॥

ममेयं भूमिरित्युक्तौ वेमापहसति क्षितिः ।
धनं हसत्यदातारं भीरुं हसति चान्तकः ॥३६५॥

If he says this ground is my own, the field laughs at him His wealth derides the miser who never bestows a gift! and death laughs at him who is afraid in battle. 365.

366. पंकजाक्षिगन्न बंगारु बोडगन्न, दिम्मुघट्टु वेग देलिविकेल्ल ।
मनुजुलकुनु दत्त्व महि मेट्लुगलुगुरा?, विश्वदाभिराम विनुर वेम!॥

कान्तां च कनकं दृष्ट्वा त्रिवेको वेम! नश्यति ।
नृणां गतविवेकानां तत्त्वस्य महिमा कुतः ? ॥३६६॥

When we behold a bright-eyed girl, or gaze on gold every one's mind is seized with wavering thoughts; how then can the power of truth be felt by men? 366.

367. मोंडिवानिकेल मुंजेतिकडियालु, तोर्रिवानिकेल कर्रपंड्लु ।
गाडिदलकुनेल गड्डमुल् मीसमुल्, विश्वदाभिराम विनुर वेम ! ॥

अदतो दारुदन्तैः किं? अपाणेर्वलयैश्च किम् ।
वेम! गार्दभतुल्यानां श्मश्रुभिः किं जडात्मनाम् ॥३६७॥

What has a criple to do with bracelets? of what advantage are wooden teeth to the herelipped will an ass be the better for assuming a beard and whiskers? Mere pretensions are wholly fruitless. 367.

368. मोदल प्रियनुवृद्धिप मोसंबु जेसियु, बोज्जकोरके मनसु बोंदु परचि।
बीदकुक्करीति बेरगुनु मनुजुंडु, विश्वदाभिराम विनुर वेम ! ॥

विधिनोक्तं न कृत्वादौ क्ष्वयित्वोदरंभरिः ।
समाधाय मनो वेम! दीनश्श्वेवेह वर्धते ॥३६८॥

He who neglects the highest end of his being, practises guile, and who restrains his inclinations merely for the sake of his belley, such a man lives like a miserable dog. 368.

369. पुट्टिनट्टिकैन बुट्टुनु मोहंबु, पुट्टु मोहमेल्ल बूड द्रोक्कि ।
गट्टिचेसि चूड गनुपिंचु ब्रह्मंबु, विश्वदाभिराम विनुर वेम ! ॥

महतोऽपि भवेन्मोहः तन्मोहं यतमानसः ।
अधःकृत्य यदीक्षेत वेम! ब्रह्माथ दृश्यते ॥३६९॥

Love is produced in the heart of every man whomsoever; but if thou bury and trample upon desire whenever it is produced, and restrain it, then behold the deity shall be displayed to thee. 369.

370. पट्टुकोम्मलेक पलुपाट्ल बडुवारु, पेट्टिपोयलेक नेट्टुवारु ।
मुट्टि शिवुनिपूज मोदले सेयनेरु, विश्वदाभिराम विनुर वेम ! ॥

निराश्रयास्संयतन्तोऽप्यदातारो निरोधकाः ।
शिवस्य पूजामारभ्य वेम! कांश्चिन्न कुर्वते ॥३७०॥

Those on the one hand who are without sustenance and suffer distress; and those on the other who will give neither food nor drink, but only revile others; are equally incapable of performing the worship of Siva. 370.

371. आत्मलोनशिवुनि नतुवुगा शोधिंचि, निश्चलमुग भक्ति निलिपेनेनि।
सर्वमुक्तुडौनु सर्वंबु दा नौनु, विश्वदाभिराम विनुर वेम ! ॥

शोधयित्वात्मनि शिवं स्थिरां भक्तिं करोति यः ।
स सर्वमुक्तस्सर्वात्मा भवेद्वेम ! न संशयः ॥३७१॥

He who seeks a-right the God who dwells in the heart, and fixes unalterable faith on him, he shall attain utter absorption; he shall be resolved into the universe. 371.

372. एरिंगिम शिवपूज येम्बडु जेडिपोदु, मोदलबट्टु पट्टु वदलरादु ।
मोदलविडिचि गोड तुदि बेट्टनिच्चुना?, विश्वदाभिराम विनुर वेम! ॥

नश्येन्नार्हा शिवार्चा हि प्रागारभ्य न तां त्यजेत ।
विहायादौ निर्मितान्ते भित्तिः किं वेम! तिष्ठति ॥३७२॥

Worship of God performed according to knowledge, shall never perish fruitless; never let a man leave the hold he first takes; can a wall be completed if the found ation be neglected? 372.

373. चेट्टुवच्चे नेनि जेडनाडु दैवमुन्, मेलुवच्चे नेनि मेच्चु दन्नु ।
चेट्टु मेलु दलप जेसिन कर्ममे, विश्वदाभिराम विनुर वेम ! ॥

कष्टे स्याद्दैवनिन्दालुः आत्मश्लाघापरस्सुखे ।
कारणं कष्टसुखयोर्वेम! कर्म पुराकृतम् ॥३७३॥

If misfortune befall him, the sinner reviles the deity: if he meets with good, he lauds himself for it; but evil and good are the result of his own acts. 373.

374. కడుపుచిచ్చుచేత గామానలముచేత, గ్రోధవహ్నిచేత గుటిలపడక ।
ఒక్కమనసుతోడ నుండినప్పుడే ముక్తి, విశ్వదాభిరామ వినుర వేమ ! ॥

कामानलात् क्षुधाग्नेश्च क्रोधवह्नेरबाधितः ।
वेमैकाग्रेण मनसा तिष्ठेन्मुक्तिमान्नरः ॥३७४॥

Be not ensnared by the fire of hunger, by the flame of desire, or the heat of anger. If thou maintain one changeless disposition, this is freedom. 374.

375. పాలు పెరుగు వెన్న పాయసాన్నము నెయ్యి, జున్ను నెన్నియైన జూడబాలె ।
పాలవంటికులము బ్రహ్మంబు గానరు, విశ్వదాభిరామ వినుర వేమ ! ॥

दधि तक्रं पायसान्नं नवनीतं घृतं तथा ।
सर्वं क्षीरमयं वेम! ब्रह्म वीक्षस्व तत्समम् ॥३७५॥

plain milk; or curds; butter, or rice-milk; neyi or beesting; however many shapes it may assume, it is still milk; men cannot perceive that the deity is thus also capable of various appearances. 375.

376. చదువులందు రాజ్యపదవులందును బాడి, మోదవులందు స్త్రీల పెదవులందు ।
నాశ లుడుగునట్టి యయ్యలు ముక్తులు, విశ్వదాభిరామ వినుర వేమ ! ॥

क्षुद्रविद्यासु राज्येषु स्त्रीणामोष्ठेषु धेनुषु ।
आशां मुञ्चन्ति ये मर्त्याः मुक्तास्ते वेम! सर्वशः ॥३७६॥

Those who no longer delight in reading, in royal mansions in milch kine, and in the lips of women-these venerable men are the free. 376.

377. कडुपुकेल मनस ! कळवळपडियेदु?, कडुपुकेड दृप्ति कलुगुचुंडु ।?
कडुपु रातिलोनि कप्पकु गलुगदा?, विश्वदाभिराम विनुर वेम! ॥

किं त्वं भ्रमसि कुक्ष्यर्थं कुक्षेः तृप्तिर्मनः कुतः? ।
शिलान्तस्थस्य भेकस्य कुक्षिर्वेम! न चास्ति किम्? ॥

Why suffer anxiety, O my heart, for the belly? either here or there the belly will be filled. As to having a belly, the frog that lives in a rock is thy equal.. 377.

378. शांतमानसमुन जलुनै शीतांशु, पगिदिनुन्नवाडु परमयोगि ।
अट्टिवाडु मुक्ति नतिवेग गैकोनु, विश्वदाभिराम विनुर वेम ! ॥

प्रशान्ते मानसे शीतश्शीतांशुरिव यो मुनिः ।
वर्तते वेम! सोऽत्याशु गृह्णाति परमं पदम् ॥३७८॥

The man of calm mind, whose disposition is benign as a cool temperature, he is the perfect Yogi. Such a man shall very soon attain to holy liberty. 378.

379. मधुसंबुगोरि मक्षिकंबुलुचेरि, चोच्चि वेडललेक सोक्किनट्लु ।
मुनिगि वेडललेरु मोहंबुराशिलो, विश्वदाभिराम विनुर वेम ! ॥

आकांक्ष्य मधु वेमाशु प्रविश्य मधु मक्षिकाः ।
यथा निर्गमनाशक्ता मग्ना मोहाम्बुधौ तथा ॥३७९॥

Like flies that longing for honey, approach it, entet, are intoxicated, and unable to extricate themselves; so, plunged in a multitude of passions, a sinner perishes without escape. 379.

380. ब्रह्ममुन्न चोटु परमंगदेलियक यॆंदो वेदुक ब्रह्म मेलकलुगु? ।
अंजनंबुलेक गासोम्मु दोरकुना ?, विश्वदाभिराम विनुर वेम ! ॥

अजानन् ब्रह्मणस्स्थानं वेमान्यत्रगवेषणात् ।
किं ब्रह्म दृश्यते? वित्तं लभ्यते किं विनाञ्जनम् ॥३८०॥

If we know not truly the abode of the deity, how should we discover it, search as we may? that object cannot be traced without the requisite divining rod. 380.

381. हीनु डेन्निविद्य लिल नभ्यसिंचिन, घनुडु काडु हीनजनुडे कानि।
परिमळमुल गर्दभमु मोय घनमौने?, विश्वदाभिराम विनुर वेम ! ॥

अभ्यस्तसर्वविद्योपि वेम! स्यान्न घनः खलः ।
जड एव घनः किं स्यात्? खरो गन्धान्वहन्नपि ॥३८१

Though the man of base heart have learnt all the sciences in the world, he does uot thereby become noble, but is a depraved being. Will ru-bbing perfumes over an ass, at all alter its nature? 381.

382. मनमुलोनुन्न ममतलन्नियु गोसि, दृढमु जेसि मनसु देट्टवरचि ।
कटमु निल्चुवाडु घनतर योगिरा, विश्वदाभिराम विनुर वेम ! ॥

छित्वा हृत्स्थानि सर्वाणि ममत्वानि दृढं मनः ।
कृत्वा शुद्धं यस्तु देहं धत्ते वेम! स तापसः ॥३८२॥

He how understands all the secrets of his heart who has cut off his passions and pnrified himself; he who restrains his body, this is the ture saint. 382,

383. कागलपनुलेल्ल गा केट्टबोवुनु?, कानिपनुलु काने कावु भुविनि ।
महिम वेरेयुंडे मनतोड नुन्नदा ?, विश्वदाभिराम विनुर वेम !॥

न भविष्यन्त्यभाव्यानि नाभावो भाविकर्मणाम् ।
महिमा पृथगस्त्यैव वेमास्माभिस्तु किं भवेत् ॥३८३॥

How should all that is destined to happen fail of occurring? That which is not doomed to us shall never befall us? The ruling power is independent of ourselves. 383.

384. पामुकन्न लेदु पापिष्ठ मगुजीवि, अट्टिपामु चेप्पिनट्लु विनुनु ।
इलनु मोहिदेल्प नेव्वरिवशमया?, विश्वदाभिराम विनुर वेम ! ॥

नाहेर्जीव्यस्ति पापीयान् यथोक्तं श्रुणुते हि सः ।
मोहिनं बोधितुं वेम! शक्नुवन्ति न केपि च ॥३८४॥

No animal is more vile than the serpent, yet the serpent will obey that which is said to it; but in whose power is it to teach mildness to the lustful man? 384.

385. गतमु चेसिनट्टि कर्मबंधमुलन्नि, परिसिपोवु सत्यगुरुनिवलन ।
कुम्मरि कोकयेडु गुदियकु नोकनाडु, विश्वदाभिराम विनुर वेम!॥

कर्मबन्धानि पूर्वाणि छिद्यन्ते गुरुणा सता ।
वेमैकाब्दं कुलालस्य दण्डस्यैकं क्षणं घटाः ॥३८५॥

All the bonds wherewith our former actions, in an earlier transmigration, have bound us, shall be done away by a teacher of the truth; as they say "a year to a potter and a day to a cudgel". 385.

386. अन्निजाड लुडिगि यानंदकामुडै, निन्नु नम्मजालु निष्ठतोड ।
निन्नु नम्म मुक्ति निक्कंबु नीयान, विश्वदाभिराम विनुर वेम !॥

सुखार्थी पद्धतीस्सर्वास्त्यक्त्वा त्वां विश्वसेन्नरः ।
भवद्विस्रम्भणान्मुक्तिः भवेद्वेम ! न संशयः ॥३८६॥

He who gives up every other object, and seeking happiness alone, trusts in Thee with full reliance: by that faith shall (I protcst by Thee) gain perfection. 386.

387. चिप्पलोनबड्ड चिनुकु मुत्यंबाये, नीरुलबड्ड चिनुकु नीरुगलिसे ।
प्राप्तमुंडुचोट फलमेल तप्पुरा ?, विश्वदाभिराम विनुर वेम ! ॥

मौक्तिकं पतितश्शुक्तौ स्यादप्स्वब्बिन्दुरम्मयः ।
प्राप्तं यद्यस्ति वेमेह तत्र किं न भवेत् फलम् ? ॥३८७॥

The drop that falls into the oyster-shell becomes a pearl while the drop that falls into the wave turns to water: if the situation be suitable, the fruit shall not fail. 387.

388. पप्पुलेनिकूडु परुल कसह्यमौ, अप्पुलेनिवाडे यधिकबलुडु ।
मुप्पुलेनिवाडु मोदल सुज्ञानुंडु, विश्वदाभिराम विनुर वेम !॥

असह्यं सूपहीनान्नं अनृणी स्यान्महाबलः ।
भवबन्धविमुक्तस्तु सुज्ञानी वेम ! कथ्यते ॥३८८॥

Rice without herbs is ungrateful to the guest. one who is out of debt is thereby the more powerful; and he who is free from death, is the no; blest of the wise. 388.

389. मोगमुजूचिनपुडे मोहंबु धनमु[illegible] धनमु जूचिनपुडे तगुलु मनसु ।
कूलिनप्पुडरय गुसुलेल्ल विरुगुनु, विश्वदाभिराम विनुर वेम ! ॥

मुखे दृष्टे भवेन्मोहः धने दृष्टे मनो हृतम् ।
पतिते वेम ! सर्वाङ्गग्रन्थयस्स्युर्विभञ्जिताः ॥३८९॥

At beholding her face, love arises in the heart, at viewing money, we are ensnared; we fall into the snare; and all our joints are broken! 389.

390. धर्ममन्न विनरु तमुनम्मि मनरुलु, यमुनिभटुलुवच्चि यडलुनिच्चि ।
चीच्चि कोट्ट दमरु चोरबारगल रोको!, विश्वदाभिराम विनुर वेम!॥

विश्वस्य मर्त्यास्स्वैश्वर्यं धर्मं कुर्वन्त्यनादृतिम् ।
वेमैत्य यमभृत्येषु ताडयत्स्विह का गतिः ? ॥३९०॥

The men of the earth trust to themselves, and will listen to no teacher of righteousness, but the messengers of pluto come, and fill them with horror, rushing upon them to destroy them: ah! how shall they escape? 390.

391. कन्नपुत्रुनास कनकंबुमी दास, स्त्रीलमीद नास चित्तमेडलि ।
अमलुविडुवकुन्न ब्रह्मंबु गानरु, विश्वदाभिराम विनुर वेम ! ॥

औरसे तनये हेम्नि स्त्रीष्वाशाविह्वलाशयः ।
न मुञ्चेच्चेद्भ्रमं वेम ! नरो ब्रह्म न पश्यति ॥३९१॥

Unless thou free thy mind from the love of thy own son, or of gold, or of woman and free thyself from such delusion, thou shalt not see God. 391.

392. चेट्टुचेमगोट्टि चुट्टुगोडलवेट्टि, यिट्टुनट्टु पेद्दयिल्लुगट्टि ।
मिट्टिपडुनु नरुडु मीदि चेटेरुगक, विश्वदाभिराम विनुर वेम !॥

छित्वा तरुलताः भित्तीः कृत्वा निर्माय मन्दिरम् ।
वेमाहं कुरुते मर्त्यो न वेत्त्यागामि दुस्स्थितिम् ॥३९२॥

After feelling the trees, and walling in a spot, and building so large a house, a man is puffed up with pride; and forgets the ruin that awaits him. 392.

393. ओक्कतोलु देच्चि योरपु बोम्मनु जेसि, आडुनट्टुलु जेसि यट्टेवेयु ।
तन्नु द्रिप्पुवानि दा नेलगानडो !, विश्वदाभिराम विनुर वेम ! ॥

चर्मपाञ्चालिकां कृत्वा नरो भ्रामयते भृशम् ।
वेमात्मानं भ्रामयन्तं न पश्यति कथं शिवम् ॥३९३॥

We take a skin, and form it into an elegant puppet; we make it play, and then throw it away. But who can see him who that plays with us as puppets? 393.

394. परबलंबुजूचि प्राणरक्षणमुन, कुरिकि पारिपोवु विरिकिनरुडु ।
यमुडु कुपीतुडैन नड्डु मेव्वंडया ?, विश्वदाभिराम विनुर वेम ! ॥

भीरुः परबलं वीक्ष्य प्राणगुप्त्यै पलायते ।
कृतान्ते कुपिते वेम ! निरोद्धुं केन शक्यते ॥३९४॥

When the coward beholds the enemy's army he flees to save his lief. But if Yama be enraged who can oppose him? 394.

395. तल्लि तंड्रि चाव दनयुडु ता नेड्चु, मगडुचाव नालु वगचुचुंडु ।
कार्यवशमेकानि कल्लगदु मोहंबु, विश्वदाभिराम विनुर वेम ! ॥

वेमेह मृतयोः पित्रोः पुत्रो रोदिति दुःखितः ।
मृते भर्तरि भार्या च कार्यार्थं न हृदि व्यथा ॥३९५॥

When his mother or father dies, the son weeps; when the husband dies, the wife laments. This, however is selfishness, not real love 395.

396. मनसुलोनि मुक्ति मरियोक्कचोटनु, वेदकबोवुवाडु वेर्रिवाडु ।
गोर्रे जंकबेट्टि गोल्ल वेदकुरीति, विश्वदाभिराम विनुर वेम ! ॥

स्वचेतसि स्थितां मुक्तिं योऽन्यत्रान्वेष्टुमिच्छति ।
उन्मत्तस्स हि कक्षस्थमेषान्वेषीव गोपकः ॥३९६॥

The source of final happiness is inherent in the heart; he is a fool who seeks it elsewhere as at holy places and pilgrimages; he is like the shepherd who searched for the sheep which was in his bosom. 396.

397. आशकन्न दुःख मतिशयंबुग लेदु, चूपु निल्पकुन्न सुखमुलेदु ।
मनसुनिल्पकुन्न मरि मुक्तिलेदया, विश्वदाभिराम विनुर वेम ! ॥

नात्यन्तं दुःखमाशातः नास्थिरायां सुखं दृशि ।
चेतस्यनास्थिते वेम ! मुक्तिर्नास्ति कदाचन ॥३९७॥

There is no torment greater than that of our lusts: unless thou fix thine eye upon it, thou shalt attain no ease; and unless thy heart be fixed there is no salvation for thee. 397.

३९८. तत्त्वहीनु लुद्दु तरचुगा भुविलोन, तत्त्वमेरुगुवारु तरचुलेरु ।
कलिगिलेनिवारु कन्पिंप रारय, विश्वदाभिराम विनुर वेम ! ॥

वेम ! प्रायस्तत्त्वहीना वसन्ति जगती तथा ।
न तत्त्वज्ञा न दृश्यन्ते यदि सन्त्यपि तत्त्वतः ॥३९८॥

Numerous are those who are ignorant of tatwam the truth and few are those who are aware of it: and it is difficult to perceive who they are that know it. 398.

३९९. तानु निंद्रियमुल दुनर जयिंचिन, तत्त्व मरसिचूड तान यगुनु ।
राजयोगि यिट्लु देजरिल्लुचु नुंडु, विश्वदाभिराम विनुर वेम ! ॥

य इन्द्रियाणि जयति तत्त्वमात्मैव वेम ! सः ।
एवं नित्यं राजयोगी राजते भूरितेजसा ॥३९९॥

He who has truly vanquished his lusts, shall, by knowing the truth, be converted into truth. Thus shall he shine illustrious as the exalted Yogi. 399.

400. गुरमु गूडु जेसि गुणमु वत्ति गजेसि, तरचि गर्मसमिति जमुरुजेसि ।
मूल नीकंज्योति मुट्टिंचि चूडरा, विश्वदाभिराम विनुर वेम ! ॥

गेहं च मल्लकं कृत्वा दशां कृत्वा गुणानपि ।
स्नेहं कृत्वा कर्मचयं ज्योतिर्वेम ! प्रदीपय ॥४००॥

Covert thy corporeal dwelling into a candle stick, and the properties of thy nature into a wick let they acts be instead of oil; and finally, be illuminated with a certain divine flame. 490.

401. एन्नि येंचि पूज लेंचि चेसिननेमि?, भक्तिलेनि पूज फलमुलेदु ।
भक्तिकल्गुपूज बहुळकारणमुरा, विश्वदाभिराम विनुर वेम ! ॥

गणयित्वा घनाः पूजाः कृत्वा प्राप्नोति किं फलम् ।
भक्तिं विना पूजया किं ? भक्तिर्वेमेह कारणम् ॥४०१॥

However many modes of worship we reckon upon no adoration, devoid of faith, is of avail. Faithful homage is the only true means of attainment. 401.

402. आपगालिवेंट नडवुलवेंटनु, कोंडरालवेंट गोडवदेल ? ।
उल्लमंदुने शिवु डुंडुट देलिसरु, विश्वदाभिराम विनुर वेम ! ॥

कान्तारेषु स्रवन्तीषु शैलेषु किमु गाथया ? ।
चेतस्येव स्थितं वेम ! न विदन्ति सदा शिवम् ॥४०२॥

To what end is this toil of pilgrimages to the confluence of rivers, to holy streams, and round the rocks of the mountains? They know not that God dwells in their own body. 402.

403. गाडिदे मेरुंगु गंधंबुवासन?, कुक्क येमेरुंगु गोप्प कोदि ।
अल्पु डेमेरुंगु हरुनि गोल्चु विरक्ति, विश्वदाभिराम विनुर वेम॥

श्वा किं वेत्त्युच्चनीचत्वं ? खरश्चन्दनसौरभम् ।
तथाल्पो वेत्ति किं वेम ! वैराग्याद्धरपूजनम् ॥४०३॥

Can an ass comperehend the fragrance of perfumes? Does a dog know good form bad? Can the light fool understands the holy separation of him who serves God? 403.

404. मृडुवेळलंदु मुदमुतो शिवुनात्म, बूजसेयुवाडु पुण्यमूर्ति ।
पूजलेक मोक्षभोगंबु दोरकुना ?, विश्वदाभिराम विनुर वेम ! ॥

कालत्रये शिवं तुष्ट्या योऽर्चयेत् पुण्यएव सः ।
पूजां विना जातु कथं मोक्षभोगमवाप्नुयात् ॥४०४॥

He who at the three times of morn, noon, and night, delights to worship God in spiritual adoration, he alone is absolutely holy: devoid of worship, can we attain the enjoyment of sacred freedom? 404.

405. ओडलु बडलजेसि योगुलमनुवारु, मनसु करमषंबु मान्पलेरु ।
पुट्टमीदगोट्ट भुजगंबु चच्चुना ?, विश्वदाभिराम विनुर वेम ! ॥

श्रान्ताङ्गा योगिनंमन्याः न व्युदस्यन्ति हृन्मलम् ।
वल्मीकाग्रे हते वेम ! म्रियते किं फणाधरः ? ॥४०५॥

Those who mortify their bodies, calling themselves saints are yet unable to cure the impurity of their hearts. If you merely destroy the outsied of a white-ant hill, will the serpent that dwells therein perish? 405.

406. कुक्क येकतंबु गोवकेर ध्यानंबु, खरमुराग मेत्र गप्प मुनुक ।
आत्म नेरुगुभाव मदियेल गानरो!, विश्वदाभिराम विनुर वेम !॥

श्वैकान्तत्वं बकध्यानं रागं वेम! खरस्य च ।
मण्डूकमज्जनं चैव न कुर्वन्त्यात्मभावनाम् ॥४०६॥

The recluseness of a dog! the mediations of a crane! the chanting of an ass! the bathing of a frog! ah, why will ye not try to know your own hearts! 406.

